एतल्लोहस्थशक्तीनां वर्णसङ्केतनिर्णयः । परिभाषाचन्द्रिकोक्तरीत्या किञ्चिन्निरूप्यते ॥ ३६५॥

उक्तं हि परिभाषाचन्द्रिकायाम्,

सूत्रम्· साङ्केतका श्चतुर्वर्गीयाः ॥

विश्वम्भरकारिका —

वारुणी सूर्यकिरणादिति ध्रुवप्रभेदतः । सर्वेषां बीजलोहानां शक्तिवर्गा श्चतुर्विधाः ॥
एकैकवर्गसंक्लृप्ता श्शक्तय स्तेषु शास्त्रतः । लक्षैकं च सहस्राणां सप्तषष्टितमस्तथा ॥
शतानां सप्त तदुपर्यष्टषष्टितमः क्रमात् । इति वाल्मीकिगणितप्रमाणा स्सन्निरूपिताः ॥
तेषु वारुणिवर्गस्य कूर्म कश्यपश क्तिषु । सप्तषष्टितमी शक्ति रूष्माख्या कूर्मगर्भजा ॥
पञ्चशीतितमी शक्तिः कालाख्या काश्यपी तथा । साङ्केतिकादिमे शक्ती सकारे सन्निरूपिते ॥
अर्कांशुवर्गे मार्ताण्डभूतसञ्जातशक्तिषु । एकसप्ततिमा शक्ति र्मार्ताण्डस्याम्बरा तथा ॥
रुचिकाख्या भूतशक्तिष्षष्ट्युत्तरशतात्मिका । उभौ साङ्केतरूपेण औकारे संप्रदर्शिते ॥
तथैवादितिगर्भस्थ सूर्यनक्षत्रशक्तिषु । सुन्दाख्या नवमी शक्ति रादित्यस्य तथैव हि ॥
ऋक्षस्य शक्ति र्भौमाख्या एकोत्तरशतात्मिका । एते साङ्केतिका दत्र मकारेणाभिवर्णिते ॥
तथैव ध्रुववर्गस्था सोमबाडबशक्तिषु । इन्दुशक्ति स्सौमकाख्या नवोत्तरशतात्मिका ॥२७५॥
तथैव बाडबाशक्ति र्मेळनाख्या चतुर्दशी । इमौ साङ्केतकादत्र विसर्गे सन्निरूपिते ॥
एवं चतस्रोवर्गस्थ शक्तयस्ताः परस्परम् । खनिजानां गर्भकोशे मिळित्वा कालपाकतः ॥
सौम्यजातीयलोहत्वं प्राप्नुवन्ति न संशयः । आहत्याष्टौ शक्तयोऽस्मिन्विचारे संप्रदृश्यते ॥
एवमुक्त स्सौमलोहशक्तिसङ्केतनिर्णयः । अथ सौण्डाललोहस्य शक्तिसाङ्केतउच्यते ॥
कूर्मस्थघनदा नाम शक्ति रेकादशात्मिका । क्रमा त्साङ्केतकादत्र सकारेणाभिवर्णिता ॥
ऋङ्नामा काश्यपी शक्ति र्दशोत्तरशतात्मिका । पूर्ववत्सङ्केतिता स्या दौकारेण यथाक्रमम् ॥
शक्तिर्द्रवमुखी नाम मार्ताण्डस्य शतात्मिका । आण्वी नाम तथाभूत शक्ति स्सप्तशतात्मिका ॥
द्वे इमे साङ्केतिते चात्राऽनुस्वारेण शास्त्रतः । सूर्यस्यैकोनपञ्चाशच्छक्तिःकान्ताभिधा तथा ॥
नक्षत्राणां पञ्चविंश च्छक्ति र्वर्चाभिधानिका । उभे साङ्केतिते चात्र डकारेण यथाक्रमम् ॥
तथैव ध्रुववर्गस्थ सोमबाडबशक्तिषु । इन्दो श्चतुष्षष्ट्युत्तरत्रिशता शक्ति रुज्ज्वला । २९५॥



ङ्केतिता डकारोपर्याकारेणात्र शास्त्रतः । बाडबायाः पञ्चशतशक्तिः कालाभिधा तथा ॥
केतिका ळकारेण वर्णसंकेतनिर्णये । एवमुक्त्वा सौण्डालसङ्केतशक्तिं यथाविधि ॥
दानीं मौर्त्विकलोहशक्तिसङ्केतउच्यते । त्रिशतोत्तरसाहस्रसंख्याका पार्थिवाभिधा ॥
कूर्मशक्ति र्मकारेण पुनस्साङ्केतिता तथा । एकोत्तरद्विसहस्रसंख्याका कालिमाभिदा ॥
सङ्केतिता काश्यपस्य शक्तिरौकारतस्तथा । षष्ट्युत्तरद्विशतसंख्याका लाघवाभिधा ॥
मार्ताण्डशक्ति स्सङ्केता द्रवर्णेन निरूपिता । सप्तत्रिंशतिसंख्याका वार्चुळी नामका तथा ॥
भूतशक्तिस्तकारेण सङ्केतात्सन्निरूपिता । तिषष्ट्युत्तरसाहस्रसंख्याका रुक्मकाभिधा ॥
नक्षत्रशक्ति स्सङ्केता ढकारेणात्र वर्णिता । त्रयोदशोत्तरसंख्याका वरुणाभिधा ॥
अर्कशक्तिरिकारेण सङ्केता न्निर्णिता तथा । नवोत्तराष्टसाहस्रसंख्याका ऋजुकाभिधा ॥
निरूपितात्र सङ्केता दिन्दुशक्तिः ककारतः । द्वादशोत्तरसाहस्रसंख्याका पूष्णिकाभिधा ॥
सङ्केतिताऽनुसारेण तथैवात्र यथाक्रमम् । एवं त्रिलोहशक्तीनां वर्णसङ्केतनिर्णयम् ॥
निरूप्य तल्लोहशुद्धिक्रमोप्यत्र ततःपरम् । प्रसङ्गानुप्रसङ्गत्या किञ्चिदत्र निरूप्यते ॥

# १. लोहशुद्ध्यधिकरणम्

सू· १· तच्छुद्धिर्यथा शोधनाधिकारे·

बोधानन्दवृत्तिः —

तल्लोहशुद्धिं निर्णेतुमिदं सूत्रंप्रकीर्तितम् । पदानि त्रीणि सूत्रेऽस्मिन्कथितानि यथाक्रमम् ॥
तेष्वादिमपदा ल्लोहत्रयशुद्धि र्निरूपिता । तच्छोधनप्रकारस्तु द्वितीयपदतस्स्फुटम् ॥
तत्प्रबोधकशास्त्रं तु तृतीयेनात्र सूचितम् । पदार्थमेवं कथितं विशेषार्थोऽधुनोच्यते ॥
संस्कारदर्पणविधि मनुसृत्य यथामति । सौमसौण्डालमौर्त्वीकलोहानां शुद्धिनिर्णयः ॥
पृथक्पृथग्विधानेन संग्रहात्संनिरूप्यते । तत्रादौ सौमलोहस्य शोधनाक्रममुच्यते ॥
सौमलोहं समाहृत्य पाचके संप्रपूरयेत् । सप्तविंशतिकक्ष्योष्णवेगा त्संपाचयेद्द्रवात् ॥
जम्बीर लिकुच व्याघ्र पिञ्चा जम्बूरसैस्तथा । विस्तृतास्ये नाळयन्त्रे पाचयेद्दिवसावधि ॥

तत्संगृह्याथ विधिवत्क्षाळयित्वा ततःपरम् । पञ्चतैलै श्चतुर्द्रावैः कषायै स्सप्तभि स्तथा ॥
पृथक्पृथ ग्गालयित्वा लोहं पश्चात्समाहरेत् ॥ ३०५ ॥

॥ तदुक्तं संस्कारदर्पणे ॥

गुञ्जा कज्जल चञ्चु कुञ्जर करञ्जादि तैलेस्तथा
प्राणक्षार विरञ्चि कञ्चुकि खुग्द्रावैश्च शुद्धैः क्रमात् ॥
हिङ्गू पर्पटि घोण्टिका वरजटामांसी विदाशङ्गिणी
मत्स्याक्षी बररक्तकण्टकुवरी काषायतश्शोधयेत् ॥

एवमुक्त्वा सौमलोहशुद्धिक्रममतःपरम् । सौण्डालिकाख्यलोहस्य शोधनाक्रममुच्यते ॥
पाचनादिक्रियास्सर्वे नाळयन्त्रान्तमादरात् । सौंडालस्य यथाशास्त्रं कर्तव्यं सौमलोहवत् ॥
द्रवकाषायतैलादिसंस्कारो भिद्यते क्रमात् । षड्द्रावै स्सप्ततैलैश्च कषायैः पञ्चभिस्तथा ॥
प्रत्येकं गालयेत्तैस्तैः पश्चाल्लोहं समाहरेत् ॥ ३२० ॥

॥ उक्तं हि संस्कारदर्पणे ॥

इङ्गालगौरी सुवराटिका स्तथा मृद्वीरताप्योल्बणशुद्धतैलैः ।
तथैव चाङ्गोल सुमुष्टि शंखभल्लात काकोल विरञ्जक द्रवैस्तथा ॥
कुळुत्थ निष्पावक सर्षपाढकी गोधूम काषायक काञ्जिकैश्च ।
संशोधये त्सौण्डालिकलोहदोषं शास्त्रोक्तमार्गेण शनैश्शनैः क्रमात् ॥ इति ॥

उक्त्वा सौण्डालसंशुद्धि मेवं शास्त्रानुसारतः । अथेदानीं मौर्त्विकाख्यलोहशुद्धिक्रम उच्यते ॥
तैलद्रावककाषायत्रयै स्सम्यक्सुशोधयेत् । सौण्डालवत्पाचनादिक्रियाश्चास्यापि वर्णिताः ॥

॥ तदुक्तं संस्कारदर्पणे ॥

शिवारितैला त्कुडुपस्यद्रावका द्विषम्भरीचर्मकषायत स्तथा ।
संशोधये न्मौर्त्विकलोहजं मलं शास्त्रोक्तमार्गक्रमतो विशेषतः ॥ इत्यादि ॥
एवं संशोध्य मौर्त्वीकलोहं पश्चात्समाहरेत् ॥

संस्कारं बीजलोहानामेवमुक्त्वा यथाविधि । अथेदानीमूष्मपानामुत्पत्तिक्रममुच्यते ॥ ३१७ ॥



# १०. ऊष्मपाधिकरणम्

## अथ ऊष्मपोत्पत्तिनिर्णयः

सूत्रम् १. ऊष्मपास्त्रिलोहमयाः

बोधानन्दवृत्तिः —

ऊष्मपा इति ये प्रोक्ताः पूर्वं यानक्रियाविधौ । तेषां स्वरूपं निर्णेतुमिदंसूत्रंप्रकीर्तितम् ॥
पदद्वयं भवेदस्मिन्नूष्मलोह प्रबोधकम् । तत्रादिमपदा द्यानलोहा स्संसूचिताः क्रमात् ॥
द्वितीयपदतस्तेषां स्वरूपाद्या स्तथैव हि । ऊष्मणामुष्णमित्याहु रादित्यकिरणोद्भवम् ॥
ये पिबन्ति स्वभावेन ते प्रोक्ता ऊष्मपा इति । सौमसौण्डालमौर्त्वीका स्त्रिलोहेत्यत्र वर्णिताः ॥
तेषां लोहत्रयाणां तु समाहारोऽत्र वर्णितः । तल्लोहयोगजन्यत्वाद्विकारार्थे मयट्स्मृतः ॥
यस्मात्त्रिलोहवर्गीयलोहसंयोगतः क्रमात् । प्रभवन्त्यूष्मपा स्तस्मात्तन्मया इति कीर्तिताः ॥
पदार्थमेवं कथितं विशेषार्थोऽधुनोच्यते । सौमसौण्डालमौर्त्वीकवर्गजा श्शास्त्रतः क्रमात् ॥

॥ उक्तं हि लोहरत्नाकरे ॥

ऊष्मपाणां बीजलोहा स्त्रयस्त्रिंशदितीरिताः । सौमसौण्डालमौर्त्वीकवर्गभेदाद्यथाक्रमम् ॥ इति ॥
एकैकवर्गसंबलस्तलोहा एकादश क्रमात् । तेषां नामानि नामार्थकल्पोक्तानि यथाक्रमम् ॥
संगृह्यात्र प्रवक्ष्यामि संग्रहेण यथामति । सौमस्सौम्यकसुन्दास्य स्सोमःपञ्चाननोष्मपः ॥
शक्तिगर्भो जाङ्गलिकः प्राणनश्शंखलाघवः । इत्येकादश नामानि शक्तिसाङ्केतवर्णकैः ॥
सौमवर्गीयलोहानां प्रोक्तान्यत्र यथाक्रमम् । विरिञ्चि स्सौम्यप श्शंकुरुल्बणसूरण शिञ्जिकाः ॥
कङ्करञ्जिक सौण्डीरमुग्ध धुण्डारकस्तथा । इत्येकादश नामानि शास्त्रोक्तान्यत्र पूर्ववत् ॥
सौण्डीरवर्गलोहानां संप्रोक्तानि यथाक्रमम् । अणुको द्व्यणुकः कङ्कस्त्र्यणुकोविशदाम्बरः ॥
मृदम्बरो वालगर्भः कुवर्चःकण्ठकास्तथा । क्ष्विङ्कलद्विक इत्येकादश नामानि पूर्ववत् ॥
मौर्त्विकवर्गा लोहानामुक्तान्यत्र यथाक्रमम् । त्रयस्त्रिंशद्बीजलोहा एवं वर्गत्रयंस्मृतम् ॥
पूर्वोक्तलोहत्रयशक्तय एव स्वभावतः । तन्मयत्वा त्त्रयस्त्रिंशद्बीजलोहेष्वपीरिताः ॥३३४॥
एवमुक्त्वा बीजलोहस्वरूपं शास्त्रतस्स्फुटम् । अथ तेषां गालनार्थं मेळनक्रममुच्यते ॥

सू. २. मेळनात् ॥

बोधानन्दवृत्तिः —

पूर्वोक्तबीजलोहानां तत्तद्भागांशतः क्रमात् । संयोजनक्रमं वक्तुमिदंसूत्रंप्रकीर्तितम् ॥
त्रिवर्गेष्वेकैकलोहं तत्तत्संख्यानुसारतः । ऊष्मलोहोत्पत्तिविधौ मूषायां योजयेदिति ॥
सङ्कल्प्यतेऽत्र तद्भागसंख्याविधिविनिर्णयः ॥

॥ तदुक्तं लोहतन्त्रे ॥

अथेदानीमूष्मणाना मुत्पत्तिक्रमनिर्णये । सर्वेषां बीजलोहानां शास्त्रोक्तविधिना क्रमात् ॥
लोहानुसारतस्तेषां भागसंख्या विधीयते । ऊष्मपेषु षम्भराख्य लोहोत्पत्तिक्रियाविधौ ॥
सौमसौण्डालमौर्त्विकलोहवर्गत्रये क्रमात् । एकत्रिसप्तलोहांशान्त्र्यंशटङ्कणमिश्रितान् ॥
मूषायां योजयेत्सम्यग्दशपञ्चाष्टसंख्यकान् । ऊष्मपेषूष्मपोत्पत्तिविधाने शास्त्रतः क्रमात् ॥
चतुरेकाष्टलोहांशान्त्रिवर्गेषु सटङ्कणान् । त्रिपञ्चसप्तसंख्याकान्मूषायां मेळयेत्सुधीः ॥
तथैवोष्णहनोत्पत्तौ त्रिवर्गेषु यथाक्रमम् । द्विपञ्चनवमलोहभागांशान्षट्त्रिसप्तकान् ॥३४४॥
टङ्कणेन सुसंयोज्य मूषायां मेळयेत्ततः । राजाख्योष्मपलोहोत्पत्त्यर्थं शास्त्रविधानतः ॥
त्र्यष्टद्विलोहभागांशान् टङ्कणेन समन्वितान् । मूषायां पूरयेत्पश्चात्त्रिवर्गेष्वपि पूर्ववत् ॥
तथैवाम्लतृडुत्पत्तौ ऊष्मपेषु यथाक्रमम् । नवसप्तैकलोहांशान्त्रिवर्गेषु सटङ्कणान् ॥
दशसप्ताष्टसंख्याकान्मूषायां संनियोजयेत् । तथैव वीरहाख्योष्मप लोहोत्पत्तिविनिर्णये ॥
षट्चतुःपञ्चलोहांशान्त्रिवर्गेषु सटङ्कणान् । तारबाणार्कसंख्याकान्मूषायां संप्रपूरयेत् ॥
पञ्चघ्नाख्योष्मपोत्पत्तौ त्रिवर्गेष्वपि पूर्ववत् । अष्टषट्चतुरो लोहभागांशान्टङ्कणान्वितात् ॥
विंशाष्टादशषड्त्रिंशान्मूषायां संनियोजयेत् । ऊष्मपेष्वग्नितृट्सृष्ट्यां त्रिवर्गेषु यथाक्रमम् ॥
पञ्चद्विदशलोहांशान्त्रिंशद्विंशद्दशान्वितान् । मूषायां मेळयेत्सम्यक्टङ्कणेन समाकुलान् ॥
एवं भारहनोत्पत्तौ चोष्मपेषु यथाक्रमम् । सप्तैकादशषड्लोहभागांशान् टङ्कणान्वितान् ॥
तारभान्वब्धिसंख्याकान् त्रिवर्गेषु यथाविधि । मूषायां मेळयेत्सम्यग्गालनार्थमतःपरम् ॥
तथा शोतहनोत्पत्तौ ऊष्मपेषु यथाक्रमम् । दशनवत्रिलोहांशान्त्रिवर्गेष्वपि पूर्ववत् ॥
मूषायां मेळयेत्सम्यक् द्वाविंशाष्टादश क्रमात् । एकादशदशैकादश लोहांशान्यथाक्रमम् ॥



गरळघ्नोष्मपोत्पत्तौ त्रिवर्गेष्वपि पूर्ववत् । विंशत्त्रिंशाष्टसंख्याकान्मूषायां मेळयेत्सुधीः ॥
एवमाम्लहनोत्पत्त्या मूष्मपेषु यथाविधि । एकादशाष्टचतुरो लोहभागान्सटङ्कणान् ॥
त्रिवर्गेष्वपि विंशाष्टादशषट्त्रिंशकान्ततः । मूषायां पूरयेत्सम्यगिति शास्त्रविनिर्णयः ॥
तथा विषम्भरोत्पत्त्यां ऊष्मपेषु तथैव हि । पञ्चसप्ताष्टलोहांशान् त्रिवर्गेषु सटङ्कणान् ॥
एकोनविंशाष्टादशमूषायां मेळयेत्क्रमात् । विशल्यकृल्लोहसृष्ट्या मूष्मपेषु तथैव हि ।
त्रिपञ्चैकादशलोहभागांशान् टङ्कणान्वितान् । मूषायां पूरयेत्सम्यग्विंशद्द्वादश षट्क्रमात् ॥
द्विजमित्रोत्पत्तिविधौ ऊष्मपेषु तथैव हि । अष्टत्रिनवलोहांशान् त्रिवर्गेषु यथाक्रमम् ॥
ताराष्टदशसंख्याकान्मूषायां मेळयेत्सुधीः । तथैव वातमित्राख्योष्मपलोहक्रियाविधौ ॥
त्रिवर्गेष्वष्टषट्पञ्चलोहांशान्टङ्कणान्वितान् । मूषायां मेळयेत्सम्यग्द्वाविंशाष्टादश क्रमात् ॥
एवमुक्त्वा बीजलोहमेळनादीन्यथाक्रमम् । अथेदानीं गालनार्थं मूषालक्षणमुच्यते ॥



## ११. मूषाधिकरणम्

सू. ३. पञ्चमात् द्वितीये

बोधानन्दवृत्तिः —

मूषास्वरूपं निर्णेतुमिदंसूत्रंप्रकीर्तितम् । पदद्वयं भवेदस्मिन्मूषानिर्णयबोधकम् ॥
तत्रादिमपदान्मूषा संख्यातस्सन्निरूपिता । तथैव तद्वर्गसंख्याद्वितीयपदतः स्फुटम् ॥
पदार्थएवं कथितो विशेषार्थोऽधुनोच्यते । षोडशोष्मपलोहानां उत्पत्तौ गालनक्रमः ॥
पूर्वोक्तबीजलोहाना मेतस्यामेव वर्णितम् ॥ ३७० ॥

॥ तदुक्तं निर्णयाधिकारे ॥

उत्तमाधममध्यापभ्रंशानां गालनाविधौ । मूषास्सप्तोत्तरचतुश्शतभेदा इतीरिताः ॥
तासां द्वादशवर्गा स्स्युः जातिनिर्णयतः क्रमात् । लोहेषु ये बोजलोहास्तेषां गालनकर्मणि ॥
द्वितीयवर्गोक्त मूषा एव श्रेष्ठा इतीरिताः ॥ इत्यादि ॥

॥ लल्लोऽपि ॥

कृतकापभ्रंशकाश्च स्थलजाः खनिजास्तथा। जलजा धातुजास्तद्व दोषधीवर्गजाअपि
क्रिमिमांसक्षारवालाण्डजलोहा इति क्रमात्। उक्तं द्वादशधा शास्त्रे लोहतत्वविदां वरैः
एतेषां गालने मूषाः प्रत्येकं वर्गतः स्मृताः। तेषु द्वितीयवर्गस्थमूषाभेदा महर्षिभिः
चत्वारिंशादिति प्रोक्ता मूषाकल्पे यथाक्रमम्। तासु या पञ्चमीत्युक्ता मूषान्तर्मुखनामिका
गालने बीजलोहानां सुप्रशस्ता इतीरिता॥ इत्यादि॥

॥ तदुक्तं मूषाकल्पे ॥

पिष्टाष्टकं किट्टचतुष्टयं च लोहत्रयं लांगुळिकत्रयं च।
निर्यासषट्कं रुरुकद्वयं च क्षारत्रयश्चौषधिपञ्चकं तथा॥
इङ्गालषट्कं सृणिकाण्डपञ्चकं शाली तुषाभस्मचतुष्टयं च।
शिलाद्वयं नागमुखद्वयं च वरोळिकाटङ्कणपञ्चकं तथा॥
बालद्वयं पञ्चरसं तथैव गुञ्जाद्वयं फेनचतुष्टयं क्रमात्।
संयोज्य चैतानथ पेषणीमुखे कुर्यात्सुसूक्ष्मं मृदुशुद्धपिष्टम्॥
निर्यासमृत्पञ्चकधूसरं ततस्तस्मिन्समांशं सुनियोज्य पश्चात्।
नियम्य तत्पाचकयन्त्रतः क्रमा च्छिवारितैला त्प्रहरत्रयं पचेत्॥
संवीक्ष्य पाकं विधिवत्सुपक्वं मूषामुखे नाळमुखात्प्रपूरयेत्॥
एवं कृतेऽन्तर्मुखनाम मूषा दृढाऽतिशुद्धा भवति स्वभावतः॥ इत्यादि॥

एवमुक्त्वान्तर्मुखाख्य मूषोत्पत्तिविधिं क्रमात्। अथेदानीं व्यासटिकाविधिरत्र निरूप्यते॥

## १२. कुण्डाधिकरणम्

सू. १. अथ कुण्डस्सप्तमे नव

बोधानन्दवृत्तिः—

पूर्वसूत्रेऽन्तर्मुखाख्यमूषामुक्त्वा यथाविधि। तथा व्यासटिकां वक्तुं सूत्रोऽयं परिकीर्तितः॥



तत्सूचित पदान्यस्मिन् चत्वार्युक्तान्यथाक्रमम्। तेष्वानन्तर्यवाचीस्यादथ शब्द इति स्मृतः॥
तथा व्यासटिकारूपं द्वितीयपदतस्स्मृतम्। तृतीयपदतस्तस्या वर्गसंख्या निदर्शिता॥
संख्याव्यासटिकायाश्च चतुर्थपदतस्स्मृता। पदार्थमेवं कथितं विशेषार्थोऽधुनोच्यते॥
द्वात्रिंशदुत्तरपञ्चशतकुण्डा इति क्रमात्। बहुधा वर्णितास्शास्त्रे कुण्डतत्वविशारदैः॥
सर्वेषां बीजलोहानां गालने शास्त्रवित्तमैः। कूर्मव्यासटिका नाम तेषु सम्यङ्निरूपिता॥

॥ तदुक्तं कुण्डकल्पे ॥

सर्वेषां बीजलोहानां गालनार्थं यथाविधि। द्वात्रिंशदुत्तरपञ्चशतव्यासटिकाः स्मृताः॥
तासां वर्गविभागस्तु सप्तधा वर्णितो बुधैः। तेष्वेकैकवर्गस्थित कुण्डाष्षट्सप्ततिः स्मृताः॥
तेषु सप्तमवर्गीय कुण्डकेषु यथाक्रमम्। नवमीकुण्डिका या स्यात्कूर्मव्यासटिकेति हि॥
सैवोच्यते बीजलोहगालने शास्त्रवित्तमैः। इति॥

नारायणोऽपि॥

उक्तेषु सर्वकुण्डेषु कूर्मव्यासटिकां विना। सर्वेषां बीजलोहानां गालनं न कदाचन॥७५॥
कूर्मव्यासटिकामेवमुक्त्वा शास्त्रानुसारतः। तत्स्वरूपपरिज्ञानार्थमाकारं संप्रचक्षते॥

उक्तं हि कुण्डनिर्णये—

चतुरश्रं वर्तुलं वा कूर्माकारं यथाविधि। वितस्तिदशकं कुण्डं कारयेद्भुवि शोभनम्॥
भस्त्रिकास्थापनार्थाय तत्पुरोभागतः स्फुटम्। कूर्माङ्गवत्पञ्चमुखं पीठमेकं प्रकल्पयेत्॥
तत्कुण्डस्यान्तराळे तु मूषाकुण्डं च वर्तुळम्। कल्पयित्वा बहिर्भागे कुण्डस्यावरणद्वयम्॥
इङ्गालपूरणार्थाय यथाशास्त्रं प्रकारयेत्। पार्श्वयोरुभयोस्तस्य यन्त्रस्थानं प्रकल्पयेत्॥
सम्यग्गालितलोहानां रससंपूरणे सुधीः। रचना कूर्मकुण्डस्य प्रोक्ताचैवं महर्षिभिः॥
एवमुक्त्वा व्यासटिकां यथाशास्त्रं समासतः। अथेदानीं तद्भस्त्रिकाजातिनिर्णय उच्यते॥

## १३. भस्त्राधिकरणम्

सू. १. स्याद्भस्त्रिकाष्टमे षोडशी॥

बोधानन्दवृत्तिः—

कूर्मव्यासटिकामुक्त्वा पूर्वसूत्रे यथाविधि। तद्भस्त्रिकानिर्णयार्थं सूत्रोऽयं परिकीर्तितः॥

भस्त्रप्रबोधकपदान्यस्मिन्सूत्रे चतुःक्रमात् । तेष्वादिमपदादत्र क्रियार्थस्सन्निरूपितः ॥
द्वितीयपदतो भस्त्रालक्षणं सूचितं भवेत् । तथैव तद्वर्गसंख्या तृतीयपदतः स्मृता ॥
एवं भस्त्रिकसंख्या च चतुर्थपदतः क्रमात् । पदार्थएवं कथितः विशेषार्थोऽधुनोच्यते ॥
द्वात्रिंशदुत्तर पञ्चशतभस्त्राःप्रकीर्तिताः । कूर्मभस्त्रा तेषु मुख्या बीजलोहविगालने ॥

॥ तदुक्तं भस्त्रिकानिबन्धने ॥

यावन्त्यः कुण्डकाःप्रोक्तास्तावन्त्येव हि भस्त्रिकाः । कूर्मभस्त्रा तासु कूर्मकुंडिकायाःप्रकीर्तिता ॥

॥ नारायणोऽपि ॥

सर्वेषां लोहवर्गाणां गालनार्थं विशेषतः । द्वात्रिंशदुत्तरपञ्चशतभस्त्रा इतीरितः ॥
तासां वर्गप्रभेदस्तु अष्टधा संप्रकीर्तितः । वर्गेष्वष्टमवर्गीय भस्त्रिकासु यथाक्रमम् ॥
निर्णीता कूर्मकुण्डस्य षोडशो कूर्मभस्त्रिका इति । सर्वेषां भस्त्रिकाणां तु रचनाक्रमनिर्णयः ॥
भस्त्रिका निबन्धनाख्यग्रन्थे सम्यङ्निरूपितः । तत्संगृह्य यथाकामं किंचिदत्र निरूप्यते ॥

॥ उक्तं हि भस्त्रिकानिबन्धने ॥

सुवल्कलैश्चर्मपटप्रवर्ग्यैः क्षीरादित्वग्भि र्वरपूगवल्कलैः ।
त्रिणेत्रशुण्डीर सुरञ्जिशाल्मली शोणीरमुञ्जाकरघुण्टिकाशणैः ॥
कृतैस्सुसंस्कारजशक्तिमद्भिः पटैश्च पञ्चोत्तरषट्शतैः क्रमात् ॥
तथैव लोहैर्वरदारुताम्रविकारकीलैस्सुदृढं यथाविधि ॥
प्रकल्पयेच्चित्रविचित्रवर्णमुखादिभिः शोभितभस्त्रिकाः क्रमात् ॥ इत्यादि ॥

कूर्मभस्त्रिकालक्षणं तु तत्रैवोक्तम् ॥

पञ्चाङ्गपञ्चास्य सुपक्षपञ्चकोशैस्तथा कीलकपञ्चकैर्युता ।
विचित्रवर्णैः सुविराजिता या सा कूर्मभस्त्रा इति वर्णिता स्यात् ॥

॥ लल्लोऽपि ॥

शास्त्रोक्तष्टमवर्गीय भस्त्रिकासु यथाक्रमम् । या षोडशी भवेद्भस्त्रा कूर्मभस्त्रेति सा स्मृता ॥
कूर्मव्यासटिकायास्तु भस्त्रा सैव न चान्यथा ॥

इति महर्षि भरद्वाजप्रणीत वैमानिकप्रकरणे द्वितीयोऽध्यायः.

॥ श्रीरस्तु ॥

# ॥ अथ तृतीयोऽध्यायः ॥

## दर्पणाधिकरणम्

सू. १. दर्पणाश्च ॥

बोधानन्दवृत्तिः—

पूर्वाध्याये भस्त्रिकान्तमुक्त्वा सूत्रैर्यथाक्रमम् । अथ द्वितीयाध्यायेऽस्मिन्नुच्यन्ते यानदर्पणाः ॥
पदद्वयं भवेदस्मिन् सूत्रे दर्पणबोधकम् । तत्रादिमपदात्सम्यग्दर्पणास्सूचितास्तथा ॥
तद्विशेषप्रभेदाद्याः चकारात्सन्निदर्शिताः । पदार्थमेवं कथितं विशेषार्थोऽधुनोच्यते ॥
वैमानिकाङ्गमुकुरास्सप्तोक्ताश्शास्त्रतःक्रमात् । तेषां नामानिवक्ष्यामि लल्लोक्तानि यथाक्रमम् ॥

॥ उक्तं हि मुकुरकल्पे ॥

विश्वक्रियादर्पणोऽथ शक्त्याकर्षणदर्पणः । वैरूप्यदर्पणस्तद्व त्कुण्टिणीदर्पणस्तथा ॥ ५ ॥
पिंजुळादर्पणश्चैव गुहागर्भाख्य दर्पणः । रौद्रीदर्पणइत्येते सप्तोक्ता यानदर्पणाः ॥
तेषु विश्वक्रियादर्श इति यस्संप्रकीर्तितः । तद्यानपीठोर्ध्वमुखस्थाने आवर्तनक्रमात् ॥
प्रपञ्चे प्राणिभिस्सर्वैर्यद्यत्कर्म कृतंभवेत् । तत्साक्षाद्वीक्षणार्थं योयन्तॄणां स्थापितो भवेत् ॥
विश्वक्रियादर्श इति तमेवाहुर्मनीषिणः ॥

तदुक्तं क्रियासारे—

सत्वद्वयं शुण्डिलकद्वयं च गृध्रास्थिचैकं वरपारपञ्चकम् ।
सिञ्चोरणीपाद नखद्वयं तथा शुद्धाभ्रषट्कं वरशोणपञ्चकम् ॥
मुक्ताष्टकं सौम्यकमीननेत्र मष्टादशाङ्गारक सत्त्वमेकम् ।
सर्प त्वगष्टाञ्जनिकत्रयं तथा मातृण्णषट्कं वरशर्करा दश ॥
क्षाराष्टकं नागचतुष्टयं च फेनद्वयं गारुडवल्कलत्रयम् ॥
वैणव्यकं सप्त तथा सुशोधितं वैराज्यश्वेतौदुम्बर पञ्चकं च ॥ ४२५ ॥

एतानि संशोध्य यथाविधि क्रमात्संतोल्य चंचूपुटमूषिकायाम् ।
संपूर्य चण्डोदरकुण्डमध्ये विन्यस्य कक्ष्याशतउष्णवेगतः ॥
संगाल्यसम्यक्करदर्पणास्य यन्त्रोर्ध्वनाळास्यमुखे प्रपूरयेत् ।
एवं कृते विश्वक्रियाख्य दर्पणो भवेत्सुशुद्धो दृढसूक्ष्मरूपः ॥

॥ अथ शक्त्याकर्षणदर्पणनिर्णयः ॥

उक्त्वा विश्वक्रियादर्शस्वरूपं शास्त्रतः स्फुटम् । अथ शक्त्याकर्षणदर्पण स्सन्निरूप्यते

॥ तदुक्तं दर्पणकल्पे ॥

आकाशपरिधिकेन्द्र स्थितयानपथे क्रमात् । देहनाशकरा या स्स्यु स्त्रिवर्गविषशक्तयः
आकृष्य तास्स्वशक्त्या योनाशयति स्वभावतः । तच्छक्त्याकर्षणादर्शइतिशास्त्रान्निरूपितः

धुण्डिनाथोऽपि—

वातार्काग्निमयश्शास्त्रे त्रिवर्गा इति वर्णिताः । प्रतिवर्गसमुद्भूता यन्तृणां देहनाशकाः
द्वाविंशदुत्तरशतसंख्याकाः विषशक्तयः । तास्समाहृत्य निश्शेषं स्वशक्त्या यत्पिबेत्क्रमात् ॥
तच्छक्त्याकर्षणादर्श इति नाम्ना प्रकीर्तितः ॥

परांकुशोऽपि—

आकाशपरिधिकेन्द्रेषु वातार्काग्निसंभवाः । द्वात्रिंशदुत्तरशतसंख्याका विषशक्तयः ॥
विमानपथसन्ध्यन्तं प्रवहन्ति विशेषतः । विमानचारिणां देहमारका इति ता स्स्मृताः ॥
उक्तस्स्यात्तद्विनाशार्थं शक्त्याकर्षणदर्पण इति ।
एवमुक्त्वा तस्य नामनिर्णयं शास्त्रतस्स्फुटम् ॥
तथैव तत्पाकविधिः किंचिदत्र निरूप्यते ॥ ४३६ ॥

तदुक्तं दर्पणप्रकरणे—

पञ्चालिकं पञ्चविरञ्चसत्वं क्षाराष्टकं पिष्टचतुष्टयं च ।
जम्भारिषट्कं रजताभ्रमेकं इङ्गालसत्वाष्टक वालुकष्टयम् ॥
कूश्माण्डसत्वद्वय भारणित्रयं कन्दत्रयं पौष्कलपञ्चकं च ।
प्रवाळमुक्ताकरपञ्चकद्वयं षट्शुक्तिकात्वग्वरटङ्कणाष्टकम् ॥



मालूरु बीजत्रय शंखपञ्चकं संयोज्य सर्वं बकमूषमध्ये ।
मण्डूक कुण्डान्तर मध्यकेन्द्रे संस्थाप्य मूषां विधिवद्दृढं यथा ॥
पश्चात् धमेत्पञ्चशतोष्णकक्ष्यप्रमाणत श्शास्त्रविधानतस्सुधीः ।
नेत्रान्तसंगालित तद्रसं तत स्संगृह्य पश्चाद्विधिवच्छनैश्शनैः ॥
संपूरये द्विस्तृतदर्पणास्य यन्त्रोर्ध्वनाळास्यमुखे सुवृत्ते ।
एवंकृते शक्त्यपकर्षदर्पणो भवेत्सुसूक्ष्म स्सुदृढो मनोहरः ॥

॥ अथ वैरूप्यदर्पणनिर्णयः ॥

एवमुक्त्वा यथाशास्त्रं शक्त्याकर्षणदर्पणम् । वैरूप्यदर्पण मथ प्रवक्ष्येऽत्र यथामति ॥
स्वविमानं निरोद्धुं ये परयानात्समागताः । शत्रवः क्रोधसंविष्टा नानोपायविशारदाः ॥
भयमूर्छादिभिस्तेषां यः प्रयच्छति विस्मृतिम् । तद्वैराजिकदर्पण इति संकीर्त्यते बुधैः ॥
सप्तविंशद्विकाराश्च शास्त्रोक्तास्तु यथाक्रमम् । तत्स्वरूपप्रबोधार्थं संग्रहेण निरूप्यते ॥

॥ तदुक्तं संमोहनक्रियाकाण्डे ॥

अग्निवाताम्ब्वशनि विद्युद्धूम सागरपर्वताः । सर्प वृश्चिक भल्लूक सिंह व्याघ्रादयस्तथा ॥
भूतप्रेत पिशाचाश्च पक्षिणोऽतिभयंकराः । इति सप्तदशोक्तास्तु विकाराश्च यथाक्रमम् ॥
एवमुक्त्वा दर्पणस्य गुणनामादिकं क्रमात् । इदानीं तत्पाकविधि स्संग्रहेण निरूप्यते ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

शल्यक्षारं पञ्चक्ष्विङ्कात्रयं च लाक्षात्रयं सोमकमष्टभागम् ।
शशत्रयं राजकुरण्टिकाद्वयं इङ्गालसाराष्टक टङ्कणत्रयम् ॥ ४५० ॥
नखाष्टकं वालुकसप्तकं च मातृणषट्कं रविचुम्बकद्वयम् ।
पूरत्रयं पारदपञ्चविंशकं तालत्रयं रौप्यचतुष्टयं च ॥
क्रव्यादषट्कं गरदाष्टकं च पिष्टत्रयं कन्दचतुष्टयं च ।
वाराह पित्थत्रयसारपञ्चकं गुञ्जातैलं पञ्चविंशत्क्रमेण ॥
संगृह्यैतान्सप्तसंस्कारशुद्धान् संपूरयेन्मूषक मूषिकायाम् ।
मूषास्यकुण्डे ऽष्टशतोष्णकक्ष्या त्संगालये न्नेत्रनिमीलनान्तम् ॥

पश्चाद्गृहीत्वा वरदर्पणास्य यन्त्रोर्ध्वनाळास्यमुखे नियोजयेत् ।
एवंकृते वैराजकदर्पणो दृढश्शुद्धस्सुसूक्ष्मो भवति प्रसिद्धः ॥ ४५४ ॥

॥ अथ कुण्टिणीदर्पणनिर्णयः ॥

इत्युक्त्वा वैराजकाख्य दर्पणं शास्त्रतः स्फुटम् । इदानीं कुण्टिणीदर्पण स्वरूपं प्रचक्षते ॥
यदंशुमारान्विधानात्सर्वबुद्धिविकल्पनम् । भवेत्तत्कुण्टिणीदर्पण इति प्रोच्यते बुधैः ॥

॥ तदुक्तं पराङ्कुशे ॥

आकाश विद्युत्तरङ्गसन्धिमार्गे स्वभावतः । सप्तस्रोतावर्तवात विषसंयोगतः क्रमात् ॥
बुद्धे विकल्पदा स्सप्त जायन्ते विषशक्तयः । तासां निवारणार्थाय यत्कृतं शास्त्रवित्तमैः ॥
तत्कुण्टिणीदर्पण इत्युक्ता नाम्ना विशेषतः ॥ विषशक्ति निर्णयस्तु ॥

॥ उक्तं हि संमोहनक्रियाकाण्डे ॥

मेदोऽसृङ्मांस मज्जास्थि त्वग्बुद्धीनां विकल्पदाः ।
गालिनी कुण्टिणी काळी स्पिंजुळा चोल्बणामरा ॥
आकाश विद्युत्तरंग सन्धिमार्गादिषु स्वतः । सप्तस्रोतावर्त बात विषसम्बन्धतः क्रमात् ॥
एतास्सप्त प्रजायन्ते दुःखदा विषशक्तयः । एवमुक्त्वा कुण्टिणीदर्पणस्य नामभेदान् क्रमात् ॥
इदानीं तत्पाकविधिस्संग्रहेण निरूप्यते ॥ ४६२ ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

मृत्पञ्चकं कंचुकसप्तकं च फेनत्रयं षण्मुखसारपञ्चकम् ।
क्ष्विङ्काष्टकं खड्गनखत्रयं च क्षाराष्टकं वालुकसप्तकं च ॥
पाराष्टकं शंखचतुष्टयं च मातृणषट्कं वरतालकत्रयम् ।
गजोष्ट्रयोः क्षारचतुष्टयं च सुरंध्रिका सप्तकपञ्चतैलम् ॥
मुक्तात्वगष्टत्रितयं च शुक्तिक्षारं तथा चेन्दुचतुष्टयं च ।
एतान् सुशुद्धान्क्रमतो गृहीत्वा संपूरये च्छिञ्जिकमूषमध्ये ॥
संस्थाप्य शिञ्जीरक कुण्डमध्ये संगालये त्सप्तशतोष्णकक्ष्यैः ।
पूर्वोक्तमार्गेण नियोजयेत्तद्रसं यथाशास्त्रविधानतस्ततः ॥



अत्यन्तसूक्ष्मं सुदृढं भवेद्वचं बालार्कवत्कुण्टिणिकाख्यदर्पणम् ॥

॥ अथ पिञ्जुळादर्पणनिर्णयः ॥

अर्कांशुयुद्धसंजात शक्तिस्स्यात्पिंजुळेतिहि । सानेत्र कृष्णताराग्र प्रभाग्राहीति वर्णिता ॥
यतो निगृह्य तच्छक्तिं वेगेन स्वीयशक्तितः । यन्तॄणां कृष्णताराग्र प्रकाशं पालयत्यतः ॥
पिञ्जुळादर्पण इति नामशास्त्रे निरूपितः ॥

॥ तदुक्तमंशुबोधिन्याम् ॥

अग्नेः पूर्वदिश्यस्य स्थानमारभ्य संख्यतः । उपदिश्यस्य स्थानान्तमष्टधा दिग्विनिर्णयः ॥
यजुरारण्यके प्रोक्ता मंशूनां जातिनिर्णये । एकैकदिशि संजातरश्मयो भिन्नशक्तयः ॥
इति शास्त्रेष्वग्निभेदा त्प्रवदन्ति मनीषिणः । ऋतुकालप्रभेदेन पञ्चवातप्रवेशतः ॥
तेषामन्योन्यसंसर्गो वारुणी योगतो भवेत् । अतोंऽशूनां भवेद्युद्धं शक्तिभेदत्व कारणात् ॥
तस्मिन्परस्परं वेगा त्तत्तद्दिशि विशेषतः । सङ्घर्षणात्प्रजायन्ते चतस्रो विषशक्तयः ॥
अन्धान्धकार पिंजूष तारपा इति ताः क्रमात् । रक्त जाठर ताराग्र प्रभाश्चाक्षिद्वयं हन्युः ॥

॥ उक्तं हि संमोहनक्रियाकाण्डेऽपि ॥

सूर्यांशु युद्धात्संजाता श्चतस्रो विषशक्तयः । अन्धान्धकार पिंजूष नेत्रघ्ना इति वर्णिताः ॥
अन्धा शक्ति र्हन्ति रक्तं अन्धकारंतु जाठरम् । पिञ्जूषा कृष्णताराग्रप्रभा नेत्रद्वयं तथा ॥
निर्हन्ति तारपा शक्तिः स्वकीय विषवेगतः । इत्यादि ॥
पिंजुळादर्पणस्यैवमुक्त्वा नामविनिर्णयम् । इदानीं तत्पाकविधिस्संग्रहेण निरूप्यते ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

बाष्णीकषट्कं वरशोणपञ्चकं क्षाराष्टकं वालुकसप्तकं च ।
निर्यासमृत्पञ्चक टङ्कणाष्टकं दम्भोळिसारद्वयमष्टपारदम् ॥
शुद्धाभ्रकं पञ्चरवि त्रपुद्वयं सुरोळिकासत्वचतुष्टयं च ।
त्वगष्टकं वार्ध्युषिकत्रयं तथा कन्दत्रयं पिष्टचतुष्टयं च ॥
तालत्रयं माक्षिकसप्तकं च वृकोदरीबीज चतुष्टयं क्रमात् ।
अष्टादशैतान्वरशुद्धवस्तू न्संगृह्य सम्यक्परिशोधयेत्क्रमात् ॥

संपूर्य पश्चात्सुकपालमूषामुखे न्यसे द्व्यासटिकान्तरे दृढम् ।
सङ्गालयेत्सप्तशतोष्णकक्ष्यप्रमाणतो नेत्रनिमीलनान्तम् ॥ ४८२ ॥
संगृह्य सङ्गालिततद्रसं शनैः यन्त्रोर्ध्वनाळास्यमुखात्प्रपूरयेत् ।
पश्चाद्दृढं सूक्ष्ममतीवशुद्धं मनोहरं पिंजुळदर्पणं भवेत् ॥ इत्यादि ॥

॥ अथ गुहागर्भदर्पणनिर्णयः ॥

वारुणीवातकिरण शक्तिसङ्घर्षणक्रमात् । जायन्ते रोगदा नृणां गुहाद्या विषशक्तयः ॥
तास्समाहृत्य वेगेन विद्युत्संयोगतः पुनः । प्रसार्य परयानस्थजनोपरि विशेषतः ॥
यः प्रयच्छति दुःखानि विषरोगादिभिस्ततः । स गुहादर्पण इति प्रवदन्ति मनीषिणः ॥

॥ तदुक्तं प्रपञ्चसारे ॥

कश्यपोर्ध्व कपालाभ्यां मध्ये तिष्ठति वारुणी । कपालवारुणीमध्ये वाताः पञ्चसहस्रकाः ॥
तथैव कश्यपारोगकिरणाश्चाष्टकोटयः । तत्तद्वातसमायोगा त्प्रभिन्नाः किरणाः पुनः ॥
अनुलोमविलोमाभ्यां प्रवहन्ति विशेषतः । शक्तिवातांशुसंयोगो यदा स्यात्खे परस्परम् ॥
महादुःखकरास्तत्र गुहाद्या विषयशक्तयः । जायन्ते वेगसंयुक्ता जले बुद्बुदवत्स्वयम् ॥इति॥

॥ लल्लोपि ॥

दशोत्तरशतन्याय मनुसृत्य यथाक्रमम् । शक्तिवातांशुसंयोगो यदा भवति वेगतः ॥
तदा सङ्घर्षणं तेषामतिवेगाद्भविष्यति । जायन्ते तेन विविधाः गुहाद्या विषशक्तयः ॥
तत्प्रयोगान्नृणां लोके भवेन्नानाविधामयाः ॥ इत्यादि ॥

॥ स्वतस्सिद्धन्यायमुक्तं वसिष्ठेन ॥

विजातीयशक्तिसाङ्कर्यात्सजातीयविषशक्तिप्रवाहस्स्यात् कूर्माण्डवत् ॥ इति ॥

॥ तदुक्तं संमोहनक्रियाकाण्डे ॥

त्रिलक्षपञ्चसाहस्रं तथा पंचोत्तरं शतम् । शक्तिवातांशुशक्तीनां परस्परविघट्टनात् ॥
रोगप्रदाः प्रजायन्ते गुहाद्या विषशक्तयः । कुष्ठापस्मारग्रहणी श्वासशूलप्रदाःक्रमात् ॥
तासु मुख्याः पञ्च इति शक्तयः परिकीर्तिताः । तासां नामानि विधिवत्संग्रहेण निरूप्यते ॥
गृध्रगोगोधारुजारौद्रो गुहा इति च पञ्चधा । एतत्प्रचोदनाद्रोगप्रदानार्थं तु यत्कृतम् ॥
तद्गुहागर्भदर्पण इत्युक्तं शास्त्रवित्तमैः । एवमुक्त्वा गुहागर्भदर्पणं शास्त्रतः स्फुटम् ॥ ४९८ ॥
तस्येदानीं पाकविधि स्संग्रहेण प्रकीर्त्यते ।



॥ तदुक्तं दर्पणप्रकरणे ॥

वराटिकासप्तकमञ्जुळत्रयं डिम्भीरषट्कं रजकाष्टकं तथा ।
मण्डूरषट्कं वरपारदाष्टकं तालत्रयं व्राह्मिकसप्तकं ततः ॥
नागद्वयं चाञ्जनिकाष्टकं तथा मातृण्णषट्कं वरवालुकाष्टकम् ।
किशोरषट्कं मुचुकुन्दपञ्चकं तैलद्वयं लोहिकपञ्चविंशतिः ॥
मृडानिगर्भोद्भवसत्त्वपञ्चकं मृदष्टकं स्फाटिकपञ्चकं तथा ।
शल्यत्रयं पञ्चदशेन्दुसत्त्वकं दम्बोळिराकाद्वयसत्वपञ्चकम् ॥
एतान्क्रमाद्द्वाविंशतिवस्तुवर्गान्शुद्धान्समादाय यथाविधि क्रमात् ।
संपूर्य चञ्चूपुटमूषमध्ये चञ्चूपुटव्यासटिकान्तरे न्यसेत् ॥
संगालयेत्सप्तशतोष्णकक्ष्यैश्शास्त्रोक्तमार्गेण निमीलनान्तम् ।
पश्चात्समाहृत्य शनैश्शनैःक्रमाद्यन्त्रोर्ध्वनालास्यमुखे नियोजयेत् ॥
ततो गुहागर्भकदर्पणं भवेच्छुद्धं सुसूक्ष्मं सुदृढं मनोहरम् ।

॥ अथ रौद्रीदर्पणनिर्णयः ॥

॥ दर्शनादेव सर्वेषां द्रावणं येन जायते । तद्रौद्रीदर्पण इति प्रवदन्ति मनीषिणः ॥

॥ तदुक्तं परांकुशे ॥

रुद्राण्योषराभ्रलिङ्गौ यत्र संमेळनं भवेत् । रौद्री नाम भवेत्काचिच्छक्तिस्तत्रोग्ररूपिणी ॥
अर्कांशुयोगत स्सा तु सर्वान्संद्रावयेत्स्वयम् । यद्रुद्राण्योषराभ्रलिङ्गाभ्यां क्रियते क्रमात् ॥
तद्रुद्राणीदर्पण इत्युक्तं शास्त्रविदां वरैः ॥

॥ उक्तं च संमोहनक्रियाकाण्डे ॥

रौद्री भान्वंश संयोगा ज्जायते मारिकाभिधा । विषशक्तिस्तया सूर्यकिरणाशनिसम्भवः ॥
तत्संदर्शनमात्रेण परयानविनाशनम् । यत्करोति विशेषेण तद्रौद्रीदर्पणो भवेदिति ॥
रौद्रीदर्पणनामादीनेवमुक्त्वा यथाविधि । तत्पाकविधिरद्यात्र संग्रहेण निरूप्यते ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

नागाष्टकं शाल्मलिकत्रयं तथा दुर्वारषट्कं कुडुपिञ्जराष्टकम् ।

द्रोण्येकविंशद्रविचुम्बकाष्टकं रुद्राणिग्रावोषरसप्तविंशतिः ॥ ५१० ॥
शल्याकषट्कं वरकौटिलाष्टकं वीराभ्रलिङ्गत्रिंशतिकस्तथैव ।
क्षाराष्टकं सैकतसप्तकं तथा मातृणशट्कं वरडिम्भिकात्रयम ॥
क्ष्विङ्काष्टकं मञ्चुकमृत्तयोदश निर्यासषट्कं वरकुम्भिनीत्रयम ।
तैलत्रयं माक्षिकसप्तविंशतिर्गोधाम्लषट्कं वरपिञ्जुळाष्टकम् ॥
वैरञ्जिसत्वाष्टककन्दर्पञ्चकं तालत्रयं कार्मुकसप्तकं तथा ।
षड्विंशदेतान्विधिवत्सुशोधितान्संपूरयेत्कूष्माण्डकमूषिकायाम् ॥
कूष्माण्डकुण्डे सुदृढं निधाय संगालयेदष्टशतोष्णकक्ष्यैः ।
उन्मीलिताक्षान्तसुगालितं रसं यन्त्रोर्ध्वनाळास्यमुखे निषिञ्चेत् ॥
एवंकृते रौद्रिकदर्पणो भवेत्सूक्ष्म स्सुशुद्ध स्सुदृढो मनोहरः ॥

## २. शक्त्यधिकरणम् ॥

सू. १. शक्तयस्सप्त ॥

बोधानन्दवृत्तिः —

एवमुक्त्वा विमानस्य दर्पणान्शास्त्रतः स्फुटम् । इदानीं तच्छक्तिभेदनिर्णयस्संप्रचक्षते ॥
पदद्वयं भवेदस्मिन्शक्तिभेदप्रबोधकम् । तत्रादिमपदा च्छक्तिस्वरूपं संप्रदर्शितम् ॥
संख्यातस्तत्प्रभेदस्तु द्वितीयपदतः स्मृतः । पदार्थमेवं कथितं विशेषार्थो ऽधुनोच्यते ॥
उद्गमा पञ्जरा तद्व त्सूर्यशक्त्यपकर्षिणी । परशक्त्याकर्षिणी च तथा द्वादश शक्तयः ॥
कुण्टिणी मूलशक्तिश्चे त्येतास्स्युस्सप्तशक्तयः । इमा विमानकार्येषु प्रधानत्वेन वर्णिताः ॥
विमानस्योक्तस्थानेषु तत्तद्यन्त्रान्यथाविधि । सकीलका न्तन्त्रियुता नतिशुद्धान् सचक्रकान् ॥
संस्थापये त्केन्द्ररेखासंख्यामार्गानुसारतः ।

॥ तदुक्तं यन्त्रसर्वस्वे ॥

तुन्दिलो पञ्जर स्तद्वदंशुप श्चापकर्षकः । सान्धानिको दार्पणिकश्शक्तिप्रसवकः क्रमात् ॥
सप्तैते यानशक्तीनां यन्त्राइति विनिर्णिताः । तत्तद्यन्त्रमुखादेव तत्तच्छक्तिक्रियादयः ॥
तुन्दिलादुद्गमा शक्तिः पञ्जरात्पञ्जराभिधा । शक्तिपा त्सूर्यशक्त्यपकर्षिणी शक्तिरीरिता ॥



अपकर्षकयन्त्रेण परशक्त्यपकर्षणी । सन्धानयन्त्राद्द्वादश शक्तयस्सन्निरूपिताः ।
कुण्टिणी नामका शक्तिरुक्ता दार्पणिकादिति । शक्तिप्रसवयन्त्रेण मूलशक्तिरुदीरिता ॥
एवं क्रमात्सप्तयन्त्रशक्तयः परिकीर्तिताः ॥

॥ तत्र तावच्छौनकं सूत्रम् ॥

अदिति क्ष्मावाय्वर्केन्द्वमृताम्बरशक्तय स्सप्त वैमानिक्यः इति तासां नामान्यनुक्रमिष्यामः ।
उद्गमा पञ्जरा सूर्यशक्त्यपकर्षिणी परशक्त्यपकर्षिणी विद्युद्द्वादशक कुण्टिणी मूलशक्तिश्चेति ॥

॥ सौदामिनी कलायामपि ॥

सू. मलयरस वनशक्तयो वैमानिक्यः इति ॥

बोधानन्दवृत्तिः —

मकारोऽदितिशक्तिस्स्यात् उद्गमेति प्रचक्षते । लकारः पृथिवी शक्तिः पञ्जरेत्यभिधीयते ॥
यकारो वायुशक्तिःस्यात् सूर्यशक्त्यपकर्षिणी । रेफास्तुसूर्यशक्तिस्स्याद्विद्युद्द्वादशकःस्मृतः ॥
सकारस्त्विन्दुशक्तिःस्यात् परशक्त्यपकर्षिणी । जलशक्तिर्वकारस्स्यात्कुण्टिणीत्यभिधीयते ॥
नकारोऽम्बरशक्तिस्स्यान्मूलशक्तिरिति स्मृतः ॥ इत्यादि ॥
एवमुक्त्वा सप्तशक्तिस्वरूपं शास्त्रतः स्फुटम् । तत्तत्कृत्यं यथाशास्त्रं संग्रहेण निरूप्यते ॥

॥ तदुक्तं क्रियासारे ॥

विमानस्योर्ध्वगमनं उद्गमा शक्तितस्स्मृतम् । अधस्ताद्गमनं तस्य पञ्जरा शक्तितो भवेत् ॥
अर्कांशूष्णापहारी स्याद्वृष्टिशक्त्यपकर्षिणी । परशक्त्यपकर्षिण्या सर्वशक्तिनिरोधनम् ॥
विद्युद्द्वादशका द्यानविचित्रगमनं स्मृतम् । मूलशक्त्या सर्वशक्तिचलनाद्याः प्रकीर्तिताः ॥
सप्तशक्तिक्रिया एवमुक्त्वा यानस्य शास्त्रतः । अथ विद्युद्द्वादशकविचारः क्रियते क्रमात् ॥

॥ तदुक्तं सौदामिनीकलायाम् ॥

विमानगति वैचित्र्य प्रभेदाः द्वादशस्मृताः । तत्क्रियाकरणे विद्युच्छक्तयस्तावदेव हि ॥
तासां नामानि यानस्य गतिभेदाअपि क्रमात् । समुच्चयान्निरूप्यन्ते संग्रहेणात्र शास्त्रतः ॥
चलना कम्पना चोर्ध्वा अधरा मण्डला तथा । वेगिनी अनुलोमा च तिर्यञ्ची च पराङ्मुखी ॥
विलोमा स्तम्भना चित्राचेति द्वादश शक्तयः । विमानचालनं विद्युच्चलनाशक्तितः स्मृतम् ॥
तत्कम्पनं विशेषेण कम्पनाशक्तितो भवेत् । विमानस्योर्ध्वगमन मूर्ध्वासंचोदनाद्भवेत् ॥

यानाधोगमनं विद्यादधराशक्तितः क्रमात्। विमानमण्डलगति र्मण्डला शक्तितः स्मृता
वेगिनी शक्तितो यानगतिवैचित्र्यमुच्यते। अनुलोमद्विमानस्य प्रादक्षिण्यगतिस्स्मृता॥
तिर्यग्गमनमित्याहु स्तिर्यञ्ची शक्तियोगतः। पराङ्मुखी शक्तितःस्याद्विमानस्य पराङ्मुखम्
विलोमशक्त्या यानस्य अपसव्यगतिस्स्मृतः। स्तम्भनाशक्तितो यानस्तम्भनं परिकीर्तितम्
चित्राख्यशक्त्या यानस्य नानाविधगति स्स्मृतः। इति विद्युद्द्वादशकशक्तिकार्याण्यथाक्रमम्
उक्तानि विमानगतीरनुसृत्य यथाविधि ॥ ५४५ ॥ इत्यादि ॥

सू. २. शक्तयः पञ्चेति नारायणः ॥

बोधानन्दवृत्तिः —

मतान्तर विचारार्थं सूत्रोऽयं परिकीर्तितः। तदर्थबोधकपदान्युक्तान्यस्मिंश्चतुः क्रमात्॥
विमानगतिवैचित्र्य क्रियाकरणशक्तयः। सद्योजाताख्य यन्त्रेण सञ्जाताः पञ्च चैव हि॥
इति नारायणमुनिस्स्वानुभूत्या ब्रवीत्स्वयम्। तन्मताभिप्रायएव सूत्रेऽस्मिन् सम्प्रदर्शितः॥
तत्रादिमपदाच्छक्तिस्वरूपंसन्निदर्शितम्। संख्यया तत्प्रभेदस्तु द्वितीयपदतः स्मृतः॥
मतान्तरप्रकटनं तृतीयपदतः स्मृतम्। मतप्रवर्तकमुनिः तुरीयात्संप्रदर्शितः॥
पदार्थएवं कथितो विशेषार्थोऽधुनोच्यते। सद्योजातात्समुद्भूतशक्तयः पञ्चधा स्मृताः॥
विमानगतिवैचित्र्यक्रिया स्यादेभि रेवहि ॥ इत्यादि ॥

॥ तदुक्तं शक्तिसर्वस्वे ॥

चालन गालन पञ्जरस्फोरण वक्रापसर्पणा चेति।
गतिवैचित्र्यविधाने यानस्योक्ता महर्षिभिश्शास्त्रे ॥ इत्यादि ॥

सू. ३. चित्रिण्येवेति स्फोटायनः ॥

बोधानन्दवृत्तिः —

स्फोटायनमतं वक्तुं सूत्रोऽयं परिकीर्तितः। तदर्थबोधकपदान्युक्तान्यस्मिंश्चतुःक्रमात्॥
तत्रादिमपदाच्छक्तिनिर्णयस्सन्निदर्शितः। द्वितीयपदतः शक्तेर्निर्धारणमुदाहृतम्॥ ५५४॥
तथेत्थंभावउक्तः स्यात्तृतीयपदतःक्रमात्। मतप्रवर्तकमुनिश्चतुर्थपदतः स्मृतः॥
एवं पदार्थः कथितो विशेषार्थः प्रकीर्त्यते। विमानगतिवैचित्र्य कार्यनिर्वहणक्रिया॥
एकया चित्रिणी शक्त्या भवत्येवेति निर्णयः॥ ५५७॥



॥ तदुक्तं शक्तिसर्वस्वे ॥

वैमानिकगतिवैचित्र्यादिद्वात्रिंशदिति क्रियायोगे।
एकैव चित्रिणी शक्त्यलमिति शास्त्रैः विनिर्णितं भवति॥ ५५८॥
इत्यनुभवतः शास्त्राच्च मन्यते स्फोटायनाचार्यः॥ इत्यादि॥

॥ क्रियासारेऽपि ॥

चित्रिणी नामका विद्युच्छक्तिस्सप्तदशात्मिका। एकैव यानद्वात्रिंशत्कार्यनिर्वहणक्षमा॥

सू. ४. तदन्तर्भावात्सप्तैवेति भरद्वाजः॥

बोधानन्दवृत्तिः —

उक्त्वा सूत्रद्वयैरेवं मतान्तरमतःपरम्। स्वसिद्धान्तद्योतनार्थं सूत्रोऽयं सम्प्रकीर्तितः॥
तदर्थबोधक पदान्यस्मिन्पञ्च भवन्ति हि। तत्रादिमपदादन्तर्भावत्वं सप्तशक्तिषु॥
पूर्वसूत्रोक्तशक्तीनां सम्यक्सन्दर्शितं भवेत्। तथैव सप्तशक्तीनां प्रधानत्वं द्वितीयतः॥
उक्तार्थनिर्धारणं तु तृतीयपदतः कृतम्। चतुर्थपदतस्सम्यगित्थंभावः प्रदर्शितः॥
तथैव पञ्चमपदाद्भरद्वाजं महामुनिम्। स्वसिद्धान्तप्रवक्तारं सूचयिष्यति हि क्रमात्॥
पदार्थमेवं कथितं विशेषार्थो निरूप्यते। सद्योजातसमुद्भूत पञ्चशक्तिषु शास्त्रतः॥
प्रधानत्वेन संप्रोक्ता पञ्जरशक्तिरेवहि। अग्नेरसकाशादुत्पत्तिः स्फुलिङ्गानां यथा भवेत्॥
तथैव चालनादीनां पञ्जराशक्तितः स्मृतः॥

॥ तदुक्तं शक्तिबीजे ॥

सद्योजात समुद्भूतपञ्जराशक्तितः क्रमात्। उद्भवश्चालनादीनां उक्तं तच्छास्त्रवित्तमैः॥इत्यादि॥
सद्योजातात्समुत्पन्न पञ्जराशक्तितः क्रमात्। चालनाद्याः समुद्भूताः क्रमाच्चत्वारि शक्तयः॥

॥ इति शक्तिकौस्तुभे ॥

एतेन पञ्जरोद्भूत शक्तयश्चालनादयः। तदंशत्वात्तत्स्वरूपाविवेत्युक्ता स्स्फुलिङ्गवत्॥ ५७०॥
तस्मात्प्रधानत्वमपि तासामत्र प्रदर्शितं। सा पञ्जरा चित्रिणी च पूर्वोक्तसप्तशक्तिषु॥
अन्तर्भावात्प्रधानत्वेनोक्ता एव स्वभावतः। यतस्तयोः प्रधानत्वं सप्तशक्तिषु वर्णितम्॥
ततस्समञ्जसमिति मतद्वयमपि स्मृतम्। द्वात्रिंशत्कार्यनिर्वाहे पूर्वोक्तं सप्तशक्तिषु॥

एकैकशक्तिरेवालमिति केचिद्वदन्ति हि । तदसङ्गतमेव स्यात्कार्यभेदप्रदर्शनात् ॥
विमानस्योर्ध्वगमनं उद्गमाशक्तितः स्मृतम् । इत्यारभ्य क्रमान्मूलशक्त्येत्यन्तं स्वभावतः ॥
पूर्वोक्त सप्तशक्तीनां कार्यनिर्वहणक्रमः । पृथक्पृथक्क्रियासारे निर्णितत्वात्प्रमाणतः ॥
द्वाविंशत्कार्यनिर्वाहः कथं स्यादेकशक्तितः । एकशक्त्या सर्वकार्यनिर्वाहस्सर्वथा नहि ॥
प्रमादाद्यदि कुर्वीत तदनर्थाय केवलम् । तस्मात्सर्वप्रयत्नेन पूर्वोक्तास्सप्त शक्तयः ॥
द्वाविंशत्कार्यनिर्वाहे संयोज्या इति निर्णयः ॥ ५२८ ॥

## ३. यन्त्राधिकरणम् ॥

### सू: ५. अथोपयन्त्राणि ॥

बोधानन्दवृत्तिः —

यथोक्ताश्शक्तयः पूर्वसूत्रे यानक्रियाविधौ । तथैव यानोपयन्त्राण्यस्मिन्सम्यग्विविच्यते ॥
तदर्थबोधकपदद्वयमत्र निरूपितम् । तत्रादिमपदाद्रीतिवाचक स्सन्निदर्शितः ॥
द्वितीयपदतो यानाङ्गोपयन्त्राणि च क्रमात् । पदार्थमेवं कथितं विशेषार्थोऽधुनोच्यते ॥
याभिर्विमानद्वात्रिंशत्कार्यनिर्वाहको भवेत् । तच्छक्तयःक्रमात्पूर्वसूत्रे सम्यक्प्रदर्शिताः ॥
तत्तत्कार्योपकरणाङ्गोपयन्त्राण्यथाक्रमम् । द्वात्रिंशदितियानस्य सूत्रेऽस्मिन् संप्रदृश्यते ॥

॥ तदुक्तं क्रियासारे ॥

विमानाङ्गोपयन्त्राणि द्वात्रिंशदिति शास्त्रतः । यथोक्तं यन्त्रसर्वस्वे भरद्वाजेन धीमता ॥
तथैवात्र प्रवक्ष्यामि संग्रहेण यथामति । यन्त्रो विश्वक्रियादर्शश्शक्त्याकर्षणयन्त्रकः ॥
परिवेषक्रियायन्त्रं प्रोक्तं पश्चात्तथैव हि । अङ्गोपसंहारकाख्य यन्त्रं सर्वाङ्गसुन्दरम् ॥
पश्चाद्विस्तृतक्रियाख्यं ततो वैरूप्यदर्पणम् । पद्मचक्रमुखं नाम यन्त्रं पश्चाद्विचित्रकम् ॥
कुण्टिणी शक्तियन्त्रं च तथा पुष्पणिकं स्मृतम् । तथैव पिञ्जुळादर्शयन्त्रं पश्चाद्विचित्रकम् ॥
नाळपञ्चकयन्त्रं च गुहागर्भाभिधं तथा । तमोयन्त्रं पञ्चवातस्कन्धनाळमतः परम् ॥
रौद्रीदर्पणयंत्रं च भानुवत्संप्रकाशकम् । पश्चाद्वातस्कंधनाळकीलकं यंत्रमीरितम् ॥
ततो विद्युद्यंत्रमतश्शब्दकेंद्रमुखाभिधम् । ततो विद्युद्द्वादशकयंत्रं प्रोक्तं ततःपरम् ॥
प्राणकुण्डलिनी नाम यंत्रं शक्त्युद्गमं तथा । वक्त्रप्रसारणं तद्वच्छक्तिपञ्जरकीलकम् ॥



शिरः कीलकयंत्रं च शब्दाकर्षणयन्त्रकं । पटप्रसारणं नाम यंत्रं तद्वद्दिशांपतिः ॥ ५९३ ॥
पट्टिकाभ्रकयंत्रं च सूर्यशक्त्यपकर्षकम् । तथापस्मारधूमप्रसारणाख्य मतःपरम् ॥
तथा स्तम्भनयंत्रं चोक्तं पश्चात्तथैव हि । वैश्वानरनाळयंत्रमिति द्वात्रिंशतिः क्रमात् ॥
विमानस्याङ्गोपयंत्राणीति शास्त्रविनिर्णयः । एवमुक्त्वा विमानस्य अङ्गयंत्राण्यथाक्रमम् ॥
तेषां स्वरूपविज्ञाननिर्णयार्थं यथामति । यथा भगवता प्रोक्तं भरद्वाजेन धीमता ॥
तथैवात्र प्रवक्ष्यामि संग्रहाद्यन्त्रनिर्णयम् ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥ (अध्यायः ७.)

### सू: ६. अथाङ्गयंत्राणि ॥

व्याख्या ॥

यंत्रसंख्या विमानाङ्गयंत्राणां शास्त्रवित्तमः । विश्वक्रियाकर्षणदर्पणयंत्रादितः क्रमात् ॥
वैश्वानर नाळयंत्रान्तं द्वात्रिंशदिति स्मृतम् । तेषु क्रियाकर्षणदर्पणयंत्रं विविच्यते ॥
चतुरश्रं वर्तुलं वा वितस्त्यैकप्रमाणतः । पीठं प्रकल्प्य विधिवद्दारुणा दर्पणेन च ॥
पश्चात्तन्मध्यप्रदेशे केंद्रं कुर्याद्यथाविधि । सार्धांगुलं विहायाथ मध्यकेंद्राद्यथाक्रमम् ॥
ईशान्यादिक्रमेणाष्टदिक्षु रेखान्प्रकल्पयेत् । प्रसारणोपसंहार कीलशंकून् दृढं यथा ॥
क्रमादेकैक रेखायां द्वौ द्वौ संस्थापयेत्ततः । मध्यकेंद्र पुरोभागाद्रेखान्तं शास्त्रतः क्रमात् ॥
अंतरावरणे पञ्चावर्तकीलसमन्वितान् । प्रसारणोपसंहार कीलकांतर्गतान्दृढाम् ॥
औदुम्बराराररनाळपट्टिकाभिर्विराजितान् । अंगुलीनां षष्टितमप्रमाणेन प्रकल्पितान् ॥
विश्वोदरलोहमयान् दण्डनाळान्यथाक्रमम् । पूर्वोक्तदिक्प्रदर्शनरेखासंस्थितशङ्कुषु ॥
संधार्यावरणं कुर्यात्तस्योपरि ततः परम् । मूले मध्ये तथाचास्ये दण्डनाळान्तरस्य हि ॥
रुचिरं भास्करं विश्वक्रियादर्शनदर्पणम् । संधारयेद्दृढं तत्तत्कीलकै श्शास्त्रमानतः ॥
सकीलविद्युद्यंत्रं तु दण्डमूले नियोजयेत् । आरार नाळसंक्लृप्तकीलमावर्तकं पुनः ॥
कृत्वा समंताद्यंत्रस्य विमाने स्थापयेद्दृढम् । कांतकाचमणीन्पश्चान्मूले मध्ये तथोर्ध्वके ॥
दण्डांतरे वा पार्श्वे वा तत्तत्स्थाने नियोजयेत् । किरणप्रकाशाकर्षणदर्पणं मूलकेंद्रके ॥
वार्तुळ्यं छषकाकारं दृढं संस्थापयेत्ततः । रूपाकर्षणयंत्रं तु तत्पश्चाद्भागतो न्यसेत् ॥
इति विश्वक्रियादर्शयंत्रमुक्तं समासतः । तत्प्रयोगं प्रवक्ष्यामि संग्रहेण यथामति ॥ ६१३ ॥

दण्डं प्रसारयेदादौ कीलीचालनतस्तथा । मुखे तस्य क्रियादर्शदर्पणं योजयेद्दृढम् ॥
तन्मूले पारदद्रावं मध्यकेंद्रसमं यथा । कीलकात्संन्यसेत्तस्मिन्मणिमेकं नियोजयेत् ॥
रंध्रं तन्त्रीद्रावशुद्धान्किरणाकर्षणान्ततः । एतन्मणिमुखात्पूर्वमण्यन्तं योजयेत्क्रमात् ॥
पुनस्तद्दण्डांतरीय मध्यभागे दृढं यथा । योजयेद्भास्करादर्शं सर्षपेन सुशोधितम् ॥
पूर्ववत्तन्मूलभागे विन्यसेद्रुचिकद्रवम् । तस्मिन्नेकमणिं कीलतंत्रीयोगात्सुनिक्षिपेत् ॥
तथैव रुचिकादर्शं तन्मूले स्थापयेद्दृढम् । सूर्यस्य किरणाकर्षदर्पणं मूलकेंद्रके ॥
छषकाकारतस्सम्यग्वार्तुळ्यं योजयेत्तथा । रूपाकर्षणयंत्रस्य पश्चाद्भागे प्रकल्पयेत् ॥
रुचिरद्रावकमणेः पूर्वभागे यथाविधि । विद्युद्यंत्रं प्रतिष्ठाप्य तंत्रीं तस्मिन्नियोजयेत् ॥
रुचिरद्रावकमणौ ताभ्यां शक्तिं प्रसारयेत् । किरणाकर्षणादर्शे भास्करांशून्तथैव हि ॥
सूर्यशक्त्यष्टभागं च विद्युद्द्वादशभागकम् । रुचिरद्रावकमणि मूलकात्पारदद्रवे ॥
प्रसारयेत्तंत्रिमुखान्मणिकेंद्रांतमेव हि । तत्रत्य मणिमावृत्य तच्छक्ती स्तंतुमार्गतः ॥
विश्वक्रियाकर्षणदर्पणस्थानं विशंति हि । एवं शक्तीस्समाहृत्य स्थापयित्वास्य दर्पणे ॥
पश्चान्निर्धारयेत्सम्यग्गणितागम शोधनात् । यद्यद्देशरहस्याणि संग्रहेदिति निर्णितम् ॥
तत्तद्दिग्देशकेंद्रांतं रेखमार्गानुसारतः । गणितोक्तविधानेन लक्ष्यं कृत्वा यथाविधि ॥
कीलीस्सञ्चाल्य विधिवत् दण्डनाळं प्रसारयेत् । यावल्लक्ष्यं कृतं पूर्वं तल्लक्ष्यान्तं यथाविधि ॥
विश्वक्रियाकर्षण दर्पणमूलस्थितं क्रमात् । तद्वामकेंद्राद्विधिवत् शक्तिद्वयमतःपरम् ॥
यावत्प्रमाणं संयोज्यं तावन्मात्रं प्रसारयेत् । पूर्वोक्तदिग्देशकेंद्रलक्ष्याभिमुखतः ततः ॥
संधारयेन्मध्यकेंद्रं दर्पणस्य यथाविधि । समसङ्कलनं कुर्यात्तयोरुभयकेंद्रयोः ॥
तेन दिग्देशकेंद्रांतं व्याप्य शक्तिद्वयं ततः । तत्रत्यसर्ववस्तुप्रकाशको भवति स्वयम् ॥
पश्चान्निरुध्य तच्छक्ती पारद्रावे नियोजयेत् । ततो दिग्देशकेंद्रांतस्थितवस्तुविकारतः ॥
तद्द्रावको भवेन्नानाचित्रवर्णप्रभायुतः । सूर्यांशुशक्तिमाकृष्य पारद्रवमणौ ततः ॥
संयोजयेत्पञ्चदश लिङ्कमात्रं यथाविधि । पश्चात्पारद्रवे सम्यक्तच्छक्तिं सम्प्रवेशयेत् ॥
मणिप्रेरिततच्छक्तिं द्रवशक्तिं तथैव च । समाहृत्य विशेषेण रुचिकद्रवसंस्थिते ॥ ६३६ ॥
मणौ सन्धारयेत्पश्चात्तच्छक्तिं पूर्ववत्क्रमात् । रुचिकादर्शमूलस्थरेखाकेंद्रे नियोजयेत् ॥
तच्छक्तिं रुचिकादर्श स्वस्मिन्संधार्यते ततः । मुखदर्पणमारभ्य रुचिकान्तं यथाविधि ॥



लक्ष्यं कुर्यात्सप्ततिमादर्श नाळात्समं यथा । तथैव रूपाकर्षण यंत्र केंद्रान्त मंतरे ॥
लक्ष्यं प्रकल्पयेत्सम्य ग्रुचिकादर्शकेंद्रतः । पश्चात्पारद्रवमणि शक्ती संयोजयेत्समम् ॥
विश्वक्रियादर्शवामकेंद्र लक्ष्यात्प्रयत्नतः । दिग्देशरेखाकेंद्रान्तं गणितोक्तेन कर्मना ॥
पश्चात्संव्याप्य तच्छक्ती तत्रत्यानां स्फुटं यथा । कार्यकरणकर्तृ स्वरूपमाकृष्य वेगतः ॥
प्रतिबिम्बाकारयुक्ता सा शक्तिः पूर्ववत्पुनः । परां गति मवाप्याथ मुखदर्पण केंद्रतः ॥
आगत्य रुचकद्रावमणौ संविशति स्वयम् । तामाकृष्यातिवेगेन मणिशक्ति स्स्वभावतः ॥
स्वस्मि न्तत्प्रतिबिम्बस्वरूपं संधार्यते स्फुटम् । पश्चात्तत्रत्यरुचिक द्रावकस्य प्रभावतः ॥
प्रत्यक्षवत्तत्स्वरूपं विशदीक्रियते स्फुटम् । रूपाकर्षण यंत्रेण पश्चात्तत्प्रतिबिम्बकम् ॥
समादाय विशेषेण सप्तमाभ्रक दर्पणात् । प्रतिबिम्ब स्वरूपेण कर्तृकार्यादिकान्क्रमात् ॥
द्रष्टुं यथावद्योग्यं स्यात्पृथक्पृथक्स्वरूपतः । तस्मिन्दृष्ट्वा विमानस्य संभवापाय संचयान् ॥
विज्ञाय शास्त्रतस्सम्यक्सर्वापाय निवारणम् । कृत्वा निर्मूलमथ तद्विमानं प्रेषयेत्पुनः ॥
एतत्कार्योपयोगार्थं वर्णितं शास्त्रतः क्रमात् । विश्वक्रियाकर्षणदर्पणयंत्रं समासतः ॥

॥ अथ शक्त्याकर्षणदर्पण यंत्रनिर्णयः ॥

इत्युक्त्वा विश्वक्रियाकर्षण यंत्र मतःपरम् । शक्त्याकर्षणदर्पणयंत्र मत्र प्रचक्ष्यते ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

वियत्तरङ्ग पवन रौद्रीसंजात शक्तयः । ऋतुकालानुसारेण खेटयान विनाशकाः ॥
तास्समाकृष्य वेगेन नाशयित्वा खमण्डले । यत्स्वशक्त्या पालयति व्योमयानान्विशेषतः ॥
तच्छक्त्याकर्षणदर्पण यंत्रमिति कीर्त्यते ॥

॥ नारायणोपि ॥

रौद्रवाताकाश वीची सञ्जात विषरूपकाः । शक्तयस्त्रिविधाःप्रोक्ता व्योमयानविनाशकाः ॥
तन्निवृत्य स्वशक्त्या यद्विमानं पालयेत्स्वतः । तच्छक्त्याकर्षणदर्पणयंत्र मित्युदीर्यते ॥
यंत्रस्वभावमुक्त्वैवं संग्रहेण यथामति । अथ तद्यन्त्ररचनाविधिरत्र निरूप्यते ॥ ६५५ ॥
वितस्तित्रय मायामं वितस्तिद्वय विस्तृतम् । पीठं प्रकल्पयेच्छुद्ध क्रौञ्चलोहेन शास्त्रतः ॥

द्वाविंशदंगुलायाम मंगुलत्रय विस्तृतम । सप्तत्रिंशतिमादर्श कृतशंकुं यथाविधि ॥ ६५७ ॥
तन्मध्ये स्थापयेत्पश्चात्तस्य पूर्वदिशि क्रमात् । केंद्रत्रयं कल्पयित्वा तथैवोत्तरदक्षिणे ॥
द्वौद्वौ केंद्रौ तथाकुर्यात्समरेखाप्रमाणतः । पूर्ववत्पश्चिमे केंद्रत्रयं कुर्याद्यथाविधि ॥
प्रदक्षिणावर्तकीलान् स्थापयेत् प्रतिकेंद्रके । पश्चात्सप्तोत्तर शततमादर्श कृतान्दृढान् ॥
नाळान्संधारयेत्पश्चात्सतंत्री न्द्रवशोधितान् । प्रदक्षिणावर्तकील मूलस्थानावधि क्रमात् ॥
छषकाकारव त्पंचदशांगुल प्रमाणतः । पूर्वोक्त दर्पणा त्सम्यक्कृतपात्रं यथाविधि ॥
स्थापये च्छंकुमूलस्थ कीलकोपरि पूर्वके । वितस्त्यायामसंक्लप्तं विस्तृतेन तथाविधम् ॥
तथैवदर्शगोलं च छिद्रत्रय समन्वितम । स्थापयेन्मध्यकेंद्रस्थ कीलकोपरि पूर्ववत् ॥
द्वादशांगुल मायामं द्वादशांगुल विस्तृतम् । त्रिकोणकुड्याकारेण कृतमादर्शतः क्रमात् ॥
तृतीयकेंद्रस्थ कीलोपरि संस्थापयेत्तथा । कान्तोदुम्बर संमिश्र चक्रदण्डद्वयं क्रमात् ॥
पूत्रोक्तादर्श गोलस्य गर्भकेन्द्रे यथाविधि । सन्धारयेद्यथा सम्यग्भवेत्संघर्षणं तयोः ॥
पश्चात्तत्पश्चिमे भागे वातपादर्पणात्कृतम् । पिण्डमेकं विस्तृतास्यं शंकुमूलस्थ कीलके ॥
स्थापयेद्विधिवत्पश्चा त्पञ्चस्रोतमुखं दृढम् । शक्तिपादर्पणकृतं अन्तःप्रावाहिकं तथा ॥
मूले सूक्ष्मं तथा मध्ये वर्तुलं कण्ठसूक्ष्मकम् । विस्तृतास्यं मध्यकीलोपरि संस्थापयेत्ततः ॥
तदन्त्यकीलके तद्वद्भ्राजस्वद्द्रावकं न्यसेत् । अथ तद्दक्षिणे पार्श्वस्थितकीलद्वये ततः ॥
स्थापयेदन्योन्य संघर्षण चक्रत्रयं क्रमात् । तथैवोदीची दिशिस्थ कीलकद्वयमध्यमे ॥
कान्तपाराभ्रसत्वोर्ज कंचुकद्रावकं न्यसेत् । पश्चान्मणीन्यथाशास्त्रं तत्तत्स्थाने नियोजयेत् ॥

॥ उक्तं हि मणिरत्नाकरे ॥

भरद्वाजो साञ्जनिकस्सौर्यपिंगळकौ तथा । शक्तिपञ्जरकःपञ्च ज्योतिर्गर्भ इति क्रमात् ॥
मणयः पञ्चधा ज्ञेया श्शक्त्याकर्षण यन्त्रके ॥ इत्यादि ॥

॥ स्थाननिर्णयमाह स एव ॥

शंकुमूलस्थछषके न्यसेत्सौर्यमणिं तथा । कुड्यत्रिकोणमध्ये तु मणिं साञ्जनिकं न्यसेत् ॥
विस्तृतास्यादर्शपिण्डे न्यसेत्पैङ्गळिकं मणिम् । नाळदण्डस्य छिद्रेऽथ भारद्वाजमणिं तथा ॥



भ्राजस्वद्द्रावके पञ्चज्योतिर्गर्भमणिं न्यसेत् । कान्तपाराभ्रोर्जकञ्चुकद्रवे शक्तिपञ्जरमिति ॥
एवं मणीन् स्थापयित्वा तत्तत्स्थाने यथाविधि । आदर्शनाळसंयुक्ता न्सर्वकीलान्तरे क्रमात् ॥
तन्त्रीन्सन्धारयेत्पश्चा न्मूलकेंद्राद्यथाक्रमम । पश्चात्संचालये च्चक्रत्रयकीलं यथाविधि ॥
तेन दर्पणगोलस्थ पिण्डयोरुभयोः क्रमात् । परस्परं घर्षणं स्यादतिवेगात्स्वभावतः ॥
तस्मात्सञ्जायते शक्ति श्शतकक्ष्योष्णमानतः । अथ तच्छक्तिमादाय स्थापयित्वा यथाक्रमम् ॥
मणौ साञ्जनिके पश्चात्तन्त्रिभ्यां नाळमार्गतः । संयोजयेत्ततश्शक्तिस्तन्मणौ लयमेधते ॥
मणिगर्भस्थशक्त्या सा मिळित्वाथ स्वयं पुनः । निस्सरेन्मणिगर्भस्थ मुखकेन्द्राद्विशेषतः ॥
तामाकृष्य यथाशास्त्रं नाळतन्त्रीमुखात्पुनः । संयोजये त्सौरमणौ पूर्ववत्सप्रमाणतः ॥
ततस्तन्मणिगर्भस्थशक्त्या सा भिद्यते क्रमात् । पञ्चस्रोत स्वभावेन व्याप्य तत्रैव तिष्ठति ॥
तत्रत्य पञ्चस्रोतस्सु एकस्रोतस्ततःपरम् । योजयेन्नाळतंत्रीभ्यां भारद्वाजमणौ क्रमात् ॥
तथैव पिङ्गळमणा वेकस्रोतःप्रमाणतः । पञ्चज्योतिर्गर्भमणा वेकस्रोत स्तथैवहि ॥ ६८७ ॥
एकस्रोतोमणौ शक्तिपञ्जराख्ये नियोजयेत् । एवं प्रवेशिताः पञ्चशक्तयो मणिषु स्वतः ॥
एकैकमणिगर्भस्थ शक्तिमाकृष्य वेगतः । बहिःप्रसारणं पश्चात्कुर्वन्ति स्वेन तेजसा ॥
मणिसञ्जातशक्तीनां नामान्यत्र यथाक्रमम् । यथोक्तमत्रिणा पूर्वं निरूप्यन्ते तथैव हि ॥
राजा मौर्वीक चुण्डीर शून्यगर्भ विषोदराः । इत्येते मणिसञ्जातशक्तिनामान्यथाक्रमम् ॥
एतच्छक्तीस्समाहृय भ्राजस्व द्रावके क्रमात् । पूर्ववन्नाळतन्त्रीभ्यां योजयेत्सप्रमाणतः ॥
इमं मणिसमुद्भूनशक्तयः स्वेन तेजसा । भ्राजस्व द्रावकं प्राप्य त्रेधा तत्र प्रभिद्यते ॥
अत्रिणोक्तप्रकारेण नाम तासां निरूप्यते । मार्ताण्डा रौहिणी भद्रा चेति नामान्यथाक्रमम् ॥
मार्ताण्डशक्तिमाकृष्य पश्चाच्छास्त्रविधानतः । संयोजयेत्कान्तपाराभ्रोर्जकञ्चुकद्रावके ॥
तत्रत्यकान्तशक्त्या सा मिळित्वा चञ्चला सती । अतिवेगात्समुड्डीय गगनाभिमुखी भवेत् ॥
तां समाहृत्य विधिवन्नाळतंत्रीमुखात्पुनः । विस्तृतास्यादर्शपिण्डगर्भकेंद्रे नियोजयेत् ॥
सूर्यांशू न्स्वतरङ्गस्थ शक्तिगर्भा न्यथाविधि । सच्छिद्रनाळदण्डस्योर्ध्वनाळात्ततःपरम् ॥
समाहृत्य विशेषेण तत्रैव स्थापयेद्दृढम् । पश्चात्तन्नाळमूलस्थ केंद्रमार्गात्प्रमाणतः ॥६९९॥
विस्तृतास्यादर्शपिण्डमुखकेंद्रे प्रवेशयेत् । सूर्यांशुशक्तिस्तत्पिण्डं पश्चात्संव्याप्य वेगतः ॥
तद्गर्भस्थितमार्ताण्डशक्त्या संमिळिता स्वयम् । आकाशाभिमुखी भूत्वा परिभ्राम्यति वर्तुलम् ॥

तां समाहृत्य वेगेन विमानखपथि क्रमात् । वियत्तरङ्गप्रवाहमूलमध्ये नियोजयेत् ॥७०१॥
एवं कृतेऽथ तच्छक्तिं व्योमयानविनाशकम् । आकाशवीचीसञ्जातविषशक्तिं समूलतः ॥
आकृष्य पीत्वा वेगेन विमानं रक्षति स्वयम् । अथ तद्रौहिणीं शक्तिं समाहृत्य च पूर्ववत् ॥
संयोजयेत्कांतपाराभ्रोर्जकञ्चुकद्रावके । तस्य पाराभ्रशक्तिभ्यां मिलित्वा सातिवेगतः ॥
उड्डीयोड्डीय वेगेन गगनाभिमुखी भवेत् । विधिवत्तां समाहृत्य नाळतंत्रीमुखात्पुनः ॥
शंकुमूलस्थछपकमूलकेंद्रे नियोजयेत् । तथा विमानसञ्चाररेखामार्गाद्यथाविधि ॥७०६॥
तत्रस्थानावृत्तस्थशक्तिगर्भान्सुसूक्ष्मकान् । आदित्यकिरणान्पश्चाद्यथाशास्त्रं मरुन्मुखात् ॥
समाहृत्य प्रमाणेन छपकास्ये नियोजयेत् । ततस्समग्रं तच्छक्तिंव्याप्य तं स्वेन तेजसा ॥
तत्रस्थरोहिणीशक्त्या मिळित्वा वेगतस्स्वयम् । गगनाभिमुखी भूत्वा वेगात्संभ्राम्यति स्वयम् ॥
तत्रैव स्थाप्य तच्छक्तिं तंत्रीभ्यां सप्रमाणतः । उदीचीपार्श्वकीलस्य मूलकेंद्रांतरात्पुनः ॥
शंकुमूलस्थछपकमध्यकेंद्रे नियोजयेत् । उद्गर्भस्थितरौहिण्या मिळित्वा वेगतस्स्वयम् ॥
आकाशाभिमुखी भूत्वा परिभ्रम्यति तेजसा । विधिवत्तां समाहृत्य विमानखपथि क्रमात् ॥
वातावर्तमुखे पश्चाद्योजयेन्नाळमार्गतः । तच्छक्तिं वातसम्बन्धविषशक्तिं समूलतः ॥७१३॥
नाशयित्वा खेटयानं स्वभावाद्रक्षति स्वयम् । तथैव भद्राभाकृष्य सुरघानाळतः क्रमात् ॥
संयोजये त्कांतपाराभ्रोर्जकञ्चुकद्रावके । तस्योर्जकञ्चुकशक्त्या सा मिळित्वातिवेगतः ॥
आकाशाभिमुखी भूत्वा चक्रवद्भ्राम्यति स्वयम् । ततस्तच्छक्तिमाहृत्य कुड्यमूलस्थकेंद्रके ॥
सतंत्र नाळमार्गेण योजयेद्विधिपूर्वकम् । पश्चात्खे यानसञ्चाररेखामार्गात्प्रमाणतः ॥७१७॥
तत्रस्थरौद्रीसम्बन्धशक्तियुक्तान्सुसूक्ष्मकान् । समाहृत्यार्ककिरणा न्पिञ्जुळामार्गतः क्रमात् ॥
स छिद्रदण्डनाळाधःकेंद्रमूले नियोजयेत् । दण्डकेंद्रात्पुनस्तन्त्रीनाळमार्गात्प्रमाणतः ॥
समाकृष्यार्ककिरणशक्तिं सम्यग्यथाविधि । त्रिकोणादर्शकुड्याधो दक्षकेंद्रमुखे न्यसेत् ॥
पश्चात्समग्रं तत्कुड्यं व्याप्य वेगेन सा क्रमात् । तच्छक्त्याकर्षणात्तस्यां मिळित्वा
भ्रमति स्वयम् ॥ ७१२ ॥
पश्चात्तां तन्त्रिनाळेन सप्रमाणाद्यथाविधि । समादाय विशेषेण बाह्यवायुविवर्जिताम् ॥
कुड्यदक्षिणपार्श्वस्थमुखकेंद्रे नियोजयेत् । तद्गर्भकुड्यादुड्डीय तच्छक्त्या मिळिता सती ॥
परिभ्रमति वेगेन गगनाभिमुखं यथा । तामादायाथ विधिवद्विमानखपथि क्रमात् ॥



रौद्र्यावर्तमुखे सम्यग्योजयेन्नाळमार्गतः । एवं कृतेऽथ तद्रौद्रीविषशक्तिं समूलतः ॥ ७२९ ॥
स्वतेजसा निवार्याथ विमानं रक्षति स्वयम् । एवं शक्त्याकर्षणदर्पणयन्त्रं च तत्क्रियाम् ॥
यथाशास्त्रं निरूप्याथ संग्रहेण यथाविधि । परिवेषक्रियायंत्र मुच्यतेऽत्र यथाक्रमम् ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

पञ्चशक्तिसमायोगात् परिवेषो यथा भवेत् । तथाम्बरे विमानस्य कृत्वा शास्त्रविधानतः ॥
अविनाभावतस्तेनार्ककिरणविमानयोः । परिवेषमुखेनैव संयोज्याथ परस्परम् ॥ ७३३ ॥
विधायाधीनतां सूर्यकिरणानां यथाविधि । विमानाकर्षणं रेखामार्गातिक्रमणं विना ॥
यथा भवेत्तथा सम्यक् यः करोति स्वभावतः । परिवेषक्रियायन्त्र इति तत्संप्रचक्षते ॥ ७३५॥

॥ नारायणोऽपि ॥

पञ्चशक्तिप्रयोगेण परिवेषं स्वभावतः । कल्पयित्वा विमानस्य तेनार्ककिरणान्क्रमात् ॥
समाकृष्य विशेषेण विमानोपरि वेगतः । संयोज्य पश्चात्तत्सूर्यकिरणाधीनतां क्रमात् ॥
कृत्वा सम्यग्विमानानां स्वपथातिक्रमं विना । यत्प्रयच्छति सञ्चारे वेगं तच्छास्त्रतस्स्फुटम् ॥
परिवेषक्रियायन्त्रमिति संकीर्त्यते बुधैः ॥ इति ॥

सौदामिनीकलायामपि –

सू: क्षजलभहशक्तिसंयोगात्किरणाकर्षणम् ॥ इति ॥

॥ गोपथकारिका ॥

शिरीषमेघभूताराकाशानां शक्तयः क्रमात् । शास्त्रेऽस्मिन्क्षजलभहवर्णैस्सांकेततस्स्मृताः ॥
आसां संमेलनं कृत्वा प्रयोगादम्बरे स्फुटम् । परिवेषो भवेत्सम्य गादित्यस्य यथा घनैः ॥
तेनार्ककिरणाकर्षणं भवेन्नात्र संशयः ॥ इति ॥

॥ तदुक्तं क्रियासारे ॥

शिरीषशक्तेर्द्वौ भागौ घनस्याष्टावितीरिताः । भूशक्तेःपञ्च नक्षत्रशक्तेस्सप्त तथैव हि ॥
दशान्तरिक्षशक्ते स्स्यादिति शास्त्रविनिर्णयः । शक्त्याकर्षणयन्त्रेणै वेमारसम्य ग्यथाविधि ॥

समाहृत्य विशेषेण निर्वातं स्थापयेत्क्रमात् । पश्चात्तद्व्योमयानोर्ध्वकेन्द्रादर्शान्तरे स्फुटम् ॥
प्रतिबिम्बितसूर्यस्य प्रकाशकिरणैस्सह । संयोजयेत्तत्पूर्वोक्तपञ्चशक्तीर्यथाविधि ॥ ७४४ ॥
एवं कृतेऽम्बरे सम्यक्परिवेषो भवेद्ध्रुवम् । तेनाम्बरमणेश्शक्तिकिरणाकर्षणं क्रमात् ॥
वेगाद्भवति तान्पश्चाद्विमानोपरि शास्त्रतः । परिवेषमुखेनैव योजयेच्चेद्यथाविधि ॥ ७४६ ॥
भवेत्तत्सूर्यकिरणैस्सूत्रबद्धाण्डजादिवत् । विमानाकर्षणं सम्यगिति शास्त्रविनिर्णयः ॥ इत्यादि
परिवेषक्रियायंत्रमेवमुक्त्वा यथाविधि । अथ तद्यन्त्ररचनाविधिरत्र निरूप्यते ॥ ७४८ ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

पीठं तत्र त्रयोविंशत्केंद्राणी च तथैव हि । रेखाप्रसारणं तद्वत्केंद्रसंख्यानुसारतः ॥७४९॥
तावदेवावर्तकीलास्तंत्रीनाळास्तथैव हि । त्रिचक्रनाळस्तम्भश्च द्रावकाष्टकमेव च ॥
तथा मण्यष्टकं द्रावपात्राष्टक मतःपरम् । शिरीषघनभूम्यादिशक्त्याकर्षणदर्पणाः ॥
पञ्चविद्युच्छक्तियंत्रं त्वक्पञ्चकमतःपरम् । औदुम्बरावृत्ततंत्री रंध्रगर्भा सकीलिका ॥
भ्रामणीकीलकश्चैव स तन्त्रीकीलकान्विताः । शक्तिस्थापनपात्राणि तत्संमेलनपात्रकम् ॥
धूमप्रसारकं यन्त्र वातसंयोजकं तथा । परिवेषक्रियानाळं क्षीरचर्मप्रकल्पितम् ॥
तथार्ककिरणाकर्षणदर्पणप्रकल्पितम् । नाळमेकं ततो यानस्योर्ध्वकेन्द्रस्य दर्पणे ॥
प्रतिबिम्बितसूर्यस्य किरणाकर्षकाद्युतम् । नाळमेकं व्योमयानशिरोमणिरतः परम् ॥
सन्धानकोल्कं सूर्यकिरणानां विमानके । इति त्रयोविंशदङ्गान्युक्तानि स्युर्यथाक्रमम् ॥
संग्रहेण यथाशास्त्रं समालोच्य प्रचक्षते । वितस्तिद्वादशायामं विस्तृतं तावदेव हि ॥
आदौ प्रकल्पयेत्पीठं कृष्णपिप्पिलदारुणा । पञ्चत्रिंशत्तमादर्शावरणेनावृतं यथा ॥
पश्चात्तस्मिन्त्रयोविंशत्केंद्राणि परिकल्पयेत् । ततः केंद्रानुसारेण कुर्याद्रेखाप्रसारणम् ॥
रेखानुसारतः केंद्रस्थानेष्वथ यथाविधि । प्रदक्षिणावर्तकीलान् स्थापयेत्सुदृढं यथा ॥
दर्पणेन कृतान्नाळान्गर्भे तन्त्रीसमन्वितान् । केंद्रात्केंद्रांतरावर्तकीलमूलावधिक्रमात् ॥
रेखामार्गानुसारेण प्रत्येकं योजयेत्ततः । वितस्तिपञ्चकायामं गात्रेत्वेकवितस्तिकम् ॥
मध्ये वितस्त्यष्टकमानगात्रेण समाकुलम् । तथैव कण्ठेऽष्टादशांगुलगात्रसमन्वितम् ॥
मूले वितस्तिप्रमाणगात्रदण्डविराजितम् । वितस्तिदशविस्तारास्ययुक्तं मनोहरम् ॥



सप्तत्रिंशतिमादर्शनाळस्तम्भं यथाविधि । त्रिचक्रकीलैस्संयोज्य तन्मध्ये स्थापयेद्दृढम् ॥
तस्येशान्यक्रमादष्टद्रावकान् दिक्षु विन्यसेत् । तद्द्रावकाभिधानानि यथोक्तान्यत्रिणा क्रमात् ॥
तान्येवात्र प्रवक्ष्यामि समालोच्य यथामति । कणको क्रान्तजस्ताक्ष्यों नागो गौरी विषन्धयः ॥
खद्योतोज्वलनश्चेति वर्णिता द्रावकाः क्रमात् । रुब्णकद्रावकं स्तम्भेशान्यकेन्द्रे न्यसेत्तथा ॥
क्रांतजं पूर्वकेंद्रेऽथ ताक्ष्यं त्वाग्नेयकेंद्रके । विन्यसेद्दक्षिणे केंद्रे नागद्रावमतःपरम् ॥
गौरीं नैऋत्यकेंद्रेऽथ पश्चिमे तु विषंधयम् । विन्यसेद्वायव्यकेंद्रे खद्योतद्रावकं तथा ॥७७२॥
ज्वलनं तूत्तरे केंद्रे स्थापयेदष्टपात्रके । पात्राणां नामधेयानि शास्त्रोक्तानि यथामति ॥
शारिकानाथोक्तरीत्या प्रवक्ष्याम्यत्र संग्रहात् । शिलाभ्रपारवैरञ्जिवालुकाक्षुरग्रन्थिकाः ॥
स्फुटिकःपञ्चमृच्चैते पात्रदर्पणकारकाः । एभिः कृतादर्शपाकादेव पात्राष्टकं क्रमात् ॥
कर्तव्यमिति निर्णीतं भरद्वाजेन धीमता । दर्पणप्रकरणे तद्रचनाविधि वर्णितम् ॥
शिलादर्पणपात्रे तु रुब्णकद्रावकं न्यसेत् । पूरयेदभ्रकादर्शपात्रे काष्ण्र्यद्रवं तथा ॥
क्रांतजद्रावकं परादर्शपात्रे प्रपूरयेत् । वैरिञ्च्यादर्शपात्रेऽथ नागद्रावं तथैव हि ॥
स्फुटिकादर्शपात्रे तु खद्योतद्रावकं न्यसेत् । वालुकादर्शपात्रेऽथ गौरीद्रावं प्रपूरयेत् ॥
क्षुरग्रथिकादर्शपात्रे विषंधयद्रावकम् । पञ्चमृद्दर्पणपात्रे ज्वलनद्रावकं न्यसेत् ॥ ७८० ॥
अष्टपात्रेष्वष्टद्रावान् संपूर्य विधिवत्क्रमात् । उक्ताष्टदिक्षु विधिवद्विन्यसेत्सुदृढं यथा ॥
अष्टदिक्षु अष्टपात्रस्थाष्टद्रावकेष्वधः क्रमात् । संयोजयेदष्टमणीन्मणिप्रकरणेरितान् ॥
तेषां नामानि वक्ष्यामि समालोच्य यथामति ॥

॥ तदुक्तं मणिप्रकरणे ॥

धूमास्यो घनगर्भश्च शल्याकश्शारिकस्तथा । तुषास्यस्सोमकश्शंखोंऽशुपश्चेत्यष्टधा स्मृताः ॥
मणीनां नामधेयानि एवमुक्त्वा यथाक्रमम् । विनियोगं प्रवक्ष्यामि तेषां शास्त्रोक्तवर्त्मना ॥
रुब्णद्रावे तु धूमास्यमणिं मध्ये बिनिक्षिपेत् । तथैव क्रांतजद्रावे घनगर्भमणिं न्यसेत् ॥
काष्ण्र्यद्रावेऽथ शल्याकं शारिकं नागद्रावके । गौरीद्रवे तुषास्यं च शंखं ज्वलनद्रावके ॥
विषंधयद्रावकेऽथ सोमकं तद्वदेव हि । खद्योतद्रावके पश्चादंशुपाख्यमणिं क्रमात् ॥
एवमष्टमणी नष्टद्रावकेषु नियोजयेत् । पश्चात्तेषां पुरोभागे समरेखांतरे क्रमात् ॥ ७८८ ॥

स्थापयेद्विधिवच्छुद्धान्शक्त्याकर्षणदर्पणान् । भरद्वाजोक्तनामानि तेषामत्र यथाक्रमम् ॥
प्रवक्ष्यामि समालोच्य संग्रहेण यथामति ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

नागास्यो पवनास्यश्च धूमास्यो वारुणास्यकः । जलगर्भोऽग्निमित्रश्च छायास्यो भानुकण्टकः ॥
इति दर्पणनामानि कीर्तितान्यष्टधा क्रमात् । एवमुक्त्वाष्ट नामानि दर्पणानां यथाक्रमम् ॥
अथ तेषां यथाशास्त्रं नियोगक्रम उच्यते । धूमास्य मणिरेखायां विहायाथ षडंगुलम् ॥
नागास्यदर्पणं तत्र मणेरभिमुखं यथा । स्थापयेदूर्ध्वदेशे तु कीलयुक्तशलाकया ॥ ७९४ ॥
पवनगर्भमणेः प्रांतरेखायामपि पूर्ववत् । स्थापयेत्पवनास्याख्यदर्पणं सुदृढं यथा ॥
धूमास्यदर्पणं शल्याकरेखायां तथैव च । वारुणास्यदर्पणं तु रेखायां शारिकामणेः ॥
तथा सोमकरेखायां जलगर्भास्यदर्पणम् । तुषास्यमणिरेखायामग्निमित्राख्यदर्पणम् ॥
छायास्यदर्पणं शंखमणिरेखांतरे तथा । अंशुपामणिरेखायां भानुकण्टकदर्पणम् ॥
एवं क्रमेण विधिवत्पूर्वोक्तेनैव वर्त्मना । स्थापयेच्छक्त्याकर्षणदर्पणान्सुदृढान् क्रमात् ॥
अथ तत्पश्चिमे केंद्रे शक्तितंत्रेऽभिवर्णितम् । नवमं स्थापयेद्विद्युच्छक्तियंत्रं सकीलकम् ॥
अथ ताम्रावर्ततंत्रीन्चर्मपञ्चकवेष्टितान् । प्रसारयेच्छक्तियंत्रात्सर्वत्र विधिवत्समम् ॥
त्वक्पञ्चकस्य नामानि संग्रहेण यथामति । क्रियासारोक्तरीत्यात्र कथ्यंतेऽन्विष्य च क्रमात् ॥
घण्डा कूर्म श्वाऽऽखु शश नक्राणां च यथाक्रमम् । चर्माणि पञ्च प्रोक्तानि मुनिभिश्शास्त्रवित्तमैः ॥

॥ त्वङ्निर्णयाधिकारेऽपि ॥

आमनार्थं द्रावकाणां तंत्रीणां वेष्टनाय च । पञ्चचर्माणि शास्त्रेषु प्रोक्तानि ज्ञानवित्तमैः ॥
घण्डाकूर्मश्वाऽऽखुशशनक्राणां च यथाक्रमम् । चर्माणि पञ्चप्रोक्तानि वेष्टनासननिर्णये ॥
चर्मवेष्टिततंत्रीभिर्विद्युच्छक्तिप्रसारणम् । कुर्याच्छास्त्रानुसारेण समयोचितकर्मसु ॥
भ्रामणीकीलकं पश्चात्स्थापयेद्द्वादशान्तरे । एतत्सञ्चालनात्सर्वकेंद्रकीलप्रचालनम् ॥
यथा भवेत्तथा सम्यक्शास्त्रदृष्टेन वर्त्मना । अथ तच्चलनमार्गमनुसृत्य यथाविधि ॥८०८॥
नवमे चाष्टमे केंद्रे दशमेऽथ त्रयोदशे । द्वादश्यां षोडशे पञ्चदशैकादशकेंद्रके ॥ ८०९॥
एतेष्वष्टसु केंद्रेषु तत्तद्रेखानुसारतः । शक्तिस्थापनपात्राणि स्थापयेत्सुदृढं यथा ॥



एवमष्टसु केन्द्रेषु शक्तिपात्राण्यथाक्रमम् । संस्थाप्य पश्चात्तत्सम्मेळनपात्रं यथाविधि ॥
त्रयोविंशत्केन्द्ररेखाऽवर्तकीलमुखे न्यसेत् । अथ तद्दक्षिणे पार्श्वे एकोनविंशकेन्द्रके ॥
वातसंयोजकं यन्त्रं स्थापयेत्सुदृढं यथा ॥

॥ तदुक्तं यन्त्रसर्वस्वे ॥

विद्युत्तन्त्रीसमायोगाच्छतलिंकप्रमाणतः । भ्राम्यमाणौ पञ्चचक्रैस्संयुतं मध्यकेन्द्रके ॥
पूर्वपश्चिमकेन्द्रस्थमुखभागे यथाक्रमम् । सभस्त्रिकादण्डनाळयुग्मकीलैर्विराजितम् ॥
वातकोशद्वयाविष्टमास्यत्रयसमन्वितम् । वातस्तम्भनषट्चक्रकीलकैस्सुविराजितम् ॥
तथा प्रसारणीनाळकीलकद्वयमण्डितम् । वेगातिवेगसूक्ष्मातिसूक्ष्मशान्तादिकीलकैः ॥
सचक्रकैर्भ्राजमानं कमठाकारवत्स्थितम् । भारद्वयसमायुक्तमूर्ध्वचक्रविराजितम् ॥
वातसंयोजकं नाम यंत्रमित्युच्यते बुधैः ॥ ८१८ ॥ इत्यादि ॥

एवमुक्त्वा वातसंयोजकयंत्रमतःपरम् । धूमप्रसारणं यंत्रं संग्रहेण निरूप्यते ॥ ८१९ ॥
आस्यत्रयैः पञ्चगर्भकोशै श्चक्राष्टकैर्युतम् । कीलकत्रयसंयुक्तं शक्तिनाळेन वेष्टितम् ॥
धूमकृन्मणिसंयुक्तपञ्चद्रावसमाकुलम् । मथनोन्मथना चक्रद्वयकीलविराजितम् ॥ ८२२ ॥
धूमकोशद्वयैर्युक्तभस्त्रनाळेन संयुतम् । धूमप्रसारणीनाळमुखकीलविराजितम् ॥
एतल्लक्षणसंयुक्तं यंत्रं धूमप्रसारणम् । एतद्यन्त्रं विंशतिमे केंद्रे संस्थापयेद्दृढम् ॥
धूमप्रसारणं यंत्रमेवमुक्त्वा ततःपरम् । परिवेषक्रियानाळस्वरूपं कथ्यते क्रमात् ॥
पञ्चक्षीराम्बिकाषट्कवल्कलद्वयनिर्मितम् । क्षीरिकापटमित्युक्तं यानकार्यक्षमं मृदु ॥
तेन निर्मितनाळं यत्तदेवात्र विशेषतः । परिवेषक्रियानाळमिति सम्यङ्निरूपितम् ॥

॥ उक्तं हि क्षीरीपटकल्पे ॥

दुग्धप्रणाळीपटपादपाश्च पयोदरीपञ्चवटी विरञ्चिः ।
वृक्षेषूक्तक्षीरिकावृक्षवर्गे इमाः पञ्चक्षीरवृक्षाः क्रमेण ॥
उक्ताः प्रशस्ता इति क्षीरिवस्त्रक्रियाविधौ शास्त्रविदां वरिष्ठैः ॥ ८३८ ॥

॥ पटप्रदीपिकायामपि ॥

उक्तेषु क्षीरवृक्षेषु क्षीरिकापटकर्मणि । पयोदरी पञ्चवटी विरञ्चिः पटपादपः ॥
दुग्धप्रनाळिका चेति पञ्चेमाः क्षीरपादपाः । सुप्रशस्ता इति प्रोक्ताश्शास्त्रेषु ज्ञानवित्तमैः ॥
अम्बिकाषट्कमुक्तं क्रियासारे —
॥ इत्यादि ॥

गोदाकन्दकुरङ्गकनिर्यासान्दोळिकावियत्सारम् ।
लविकपृषत्कक्षमामलमिति शास्त्रेष्वम्बिकाषट्कम् ॥
एतत्संमेळनतः पञ्चक्षीरेषु गणितमार्गेण ।
प्रभवेत्क्षीरीवसन श्शुद्धस्सुदृढो ऽतिमृदुळश्च ॥ ८३३ ॥ इत्यादि ॥

॥ वल्कलद्वयमुक्तं अगतत्वलहर्याम् ॥

शारिकाद्या पञ्चमुखी वल्कलान्तं यथाक्रमम् । उक्तास्स्युः पञ्चसाहस्रवल्कलाश्शास्त्रवित्तमैः ॥
तेषु सिंहिकपञ्चाङ्गवल्कलद्वयमेव हि । विमानसंयोजनार्हं क्षीरिकापटनिर्णये ॥ ८३४ ॥
अत्यन्तश्रेष्ठमित्याहुः पटतत्वविदां वराः ॥ इत्यादि ॥

॥ पटस्वरूपमुक्तं क्रियासारे ॥

दुग्धप्रनाळिकाक्षीरसप्तभागमतःपरम् । पटवृक्षक्षीरभागा दश प्रोक्तास्तथा क्रमात् ॥
पयोदरी क्षीरभागा स्सप्त इत्युच्यते तथा । क्षीरस्याष्टादशांशस्स्यात्पञ्चवट्या यथाक्रमम् ॥
द्वादशांशविरिञ्चिक्षीरमुक्तं शास्त्रतः क्रमात् । एवमुक्त्वा क्षीरिकांशान्संख्यया शास्त्रतःस्फुटम् ॥
अथेदानीं यथाशास्त्रं क्षीरिकापटनिर्णये । अम्बिकाषट्कभागांशान्संख्यातः संप्रचक्षते ॥
गोदाकन्दस्य भागांशा दश इत्यभिवर्णिताः । कुरङ्गकनिर्यासांशाः प्रोक्तास्सप्तदश क्रमात् ॥
आन्दोळिका वियत्सारभागाः पञ्चदशास्तथा । लविकस्य द्वादशांशाः पृषत्कांशास्तु विंशतिः ॥
क्षमामलांशाः पञ्चदश इति शास्त्रेण निर्णिताः । अम्बिकाषट्कभागांशा इत्युक्त्वा शास्त्रतः
वल्कलद्वयभागांशानिदानीं संप्रचक्षते ॥ ८४२ ॥
[क्रमात् ॥

॥ तदुक्तं शणनिर्णयचन्द्रिकायाम् ॥

सिंहिकावल्कलस्याष्टाविंशद्भागास्तथैव हि । पञ्चाङ्गवल्कलस्याष्टादशभागा इतीरिताः ॥



पञ्चक्षीराम्बिकाषट्कवल्कलद्वयमेव च । एतेषां विधिवत्तत्तद्भागसंख्यानुसारतः ॥ ८४४ ॥
यथावत्संमेळय पाकावातयन्त्रमुखे क्रमात् । क्षीरिकापटनिर्माण कल्पोक्तेनैव वर्त्मना ॥
वारं वारं पाचयित्वा मर्दयित्वा पुनः पुनः । कृत्वा द्वादशसंस्कारान्पश्चाद्द्रावकपूर्वकम् ॥
पटगर्भक्रियायन्त्रमुखे संयोजयेत्ततः । क्षीरिकापटनिर्माणं भवेदेवं कृते ध्रुवम् ॥ इत्यादि ॥
परिवेषक्रियानाळमेतत्पटविनिर्मितम् । कीलीप्रचालनाद्भूमो यानमावरयेद्यथा ॥ ८४८ ॥
विमानमध्यकेन्द्रस्थावृत्तकीलाद्यथाविधि । यानबाह्यप्रदेशे तु अनुलोमविलोमतः ॥
वेष्टयेद्विधिवत्सम्यक्कीलकैस्सुदृढं यथा । परिवेषक्रियानाळमित्युक्त्वा शास्त्रतः स्फुटम् ॥
किरणाकर्षणाऽदर्शनाळमद्य निरूप्यते ॥ ८५१ ॥

॥ तदुक्तं नाळिकानिर्णये ॥

पञ्चोत्तरत्रिंशतदर्पणषोडशांशं काञ्चोळिकासरणसत्वकपञ्चभागम् ।
सर्पास्यपाटवसुरञ्जकसत्वषट्कं हैरण्यकान्तजटसारचतुष्टयं च ॥
शुद्धीकृतं टङ्कणमष्टभागं सिंजाणसत्वं दरकुञ्जलद्रवम् ।
मातृण्णचूर्णं मणिकुट्मलास्यादर्शं क्षारत्रयवालुका च ॥
सुरञ्जिकासत्वविरिञ्चिपिष्टं षोणाश्मकृष्णाभ्रकसत्वकं च ।
शैलूषसत्वं वरकुट्मलद्रवं एते क्रमाद्द्वादशवस्तुवर्गितम् ॥
नक्षत्रबाणार्कमुनित्र्यष्टशैलाग्निरुद्रावसुराशि पंच ।
एवं क्रमात् द्वादशवस्तुभागानाहृत्य शुद्धान्विधिवद्यथाक्रमम् ॥
मेकास्यमूषामुखरन्ध्रनाळे संपूर्य मेकोदरकुण्डमध्ये ।
संस्थाप्य वेगेन द्विपक्षभस्त्र्या संगालयेत्कक्ष्यशतत्रयोष्णात् ॥
पश्चात्समाहृत्य च तद्रसं वरं संपूरयेद्दर्पणयन्त्रनाळे ।
एवं कृते किरणाकर्षणाख्यादर्शो भवेत्सूक्ष्मरूपं च शुद्धम् ॥ ८५७ ॥ इत्यादि ॥

यदेतद्दर्पणकृतनाळं तच्छास्त्रतः स्फुटम् । किरणाकर्षणादर्शनाळमित्युच्यते बुधैः ॥
यन्त्रस्योर्ध्वमुखे पश्चान्नाळमेतन्नियोजयेत् । किरणाकर्षणादर्शनाळमुक्त्वा यथाविधि ॥
प्रतिबिम्बार्ककिरणाकर्षणादर्शनाळकम् । विविच्यतेऽत्र विधिवत्संग्रहेण यथाविधि ॥

॥ तदुक्तं नाळिकानिर्णये ॥

कूष्माण्डसत्वं कुड्डहञ्चिकाद्रवं द्विचक्रकन्दद्वयक्षारसत्वकम् ।
पञ्चास्यमूलत्रयक्षारमौर्व्यं चन्द्रद्रवं चौळिकसारसत्वम् ॥
द्वाविंशदुत्तरशतादर्शकं च श्वेताभ्रसत्वं शर्कराटङ्कणं च ।
गौरीमुखं वैणुकपृष्ठशल्यकं गोदास्यदन्तं वरनागपारदम् ॥
एते पदार्थाः पञ्चदश क्रमेण सम्यक्प्रोक्तास्स्युः शास्त्रतस्तत्वविद्भिः ॥
बाणार्कवेदज्वलनाम्बुधिर्गुण रुद्रोडुवर्णग्रहराशिविंशतिः ॥ ८६३ ॥
अष्टादशद्वादशपञ्चविंशतिस्तेषां विभागक्रम इत्युदीरितः ।
एतान्पदार्थान्पञ्चदशातिशुद्धान्समाहृत्य संवर्गिकमूषिकायाम् ॥
संपूर्य संवर्गिककुण्डमध्ये संस्थाप्य पश्चात्सुरघाख्यभस्त्रया ।
सङ्गाळयेत्पञ्चदशोत्तरत्रिशतोष्णकक्ष्यादतिवेगतः क्रमात् ॥ ८६५ ॥
पश्चात्समाहृत्य विशुध्य तद्रसं संपूरयेद्दर्पणयन्त्रनाळके ।
एवं कृते शास्त्रविधानतो भवेद्बिम्बार्कघृण्याकर्षणदर्पणश्च ॥
अत्यन्तसूक्ष्मं सुदृढं एतद्दर्पणनिर्मितम् । बिम्बार्ककिरणाकर्षादर्शनाळमितीर्यते ॥
विमानमध्यभागेऽथ दशमे केन्द्रकीलके । स्थापयेत्सुदृढं कीलैः पञ्चावर्तमुखैः क्रमात् ॥ इति
एवं बिम्बार्ककिरणादर्शनाळं यथाविधि । निरूप्य पश्चाद्यानस्य शिरोमणिरुदीर्यते ॥
किरणानां चेतरेषां तत्तच्छक्त्यपकर्षणे । विमानानां त्र्युत्तरशतशिरोमणय ईरिताः ॥

॥ तदुक्तं मणिकल्पप्रदीपिकायाम् ॥

द्वात्रिंशन्मणिवर्गेषु वर्गे द्वादशके क्रमात् । ये प्रोक्तास्त्र्युत्तरशतमणयस्ते महर्षिभिः ॥
शिरोमणय इत्युक्ता विमानानां विशेषतः । तेषां नामानि वक्ष्यामि शास्त्रोक्तानि यथाक्रमम् ॥
शङ्करो शन्तकः खर्वो भास्करो मण्डनस्तथा । कलान्तको दीप्तिकश्च नन्दको चक्रकण्ठकः ॥
पञ्चनेत्रो राजमुखो राकास्यः कालभैरवः । चिन्तामणिः कौशिकश्च चित्रको शक्तिभास्करः ॥
उडुराजो विराजश्च कल्पकः कामिकोद्भटः । पञ्चशीर्ष्णः पार्वणिकः पञ्चाक्षः पारिभद्रकः ॥
इषीकः काशभृत्काळः कञ्जास्यः कौटिकस्तथा । कलाकरः कौर्मिकश्च विषघ्नः पञ्चपावकः ॥



(15)

सैंहिकेयो रौद्रमुखो मञ्जीरो डिम्भिकोर्जकः । पिङ्गळः कर्णिकः क्रोधो क्रव्यादः कालकौळिकः ॥
विनायको विश्वमुखः पावकास्यः कपालकः । विजयो विप्लवः प्राणजिह्विको कार्मुखः पृथुः ॥
शिञ्जीरश्शिबिकश्चण्डो जम्बालः कुटिलोर्मकः । जृम्भकश्शाकमित्रश्च विशल्यः कङ्कगौरभः ॥
सुरवस्सूर्यमित्रश्च शशकश्शाकलस्तथा । शत्तयाकरश्शाम्भविकश्शिङ्खाण शिशबिकश्शुकः ॥
भेरुण्डो मुण्डकः कार्ष्ण्यो पुरुहूतः पुरञ्जयः । जम्बालिको शार्ङ्गिकश्च जम्बीरो घनदर्पकः ॥
चञ्चाक श्वापको नङ्कः पिशङ्गो वार्षिकस्तथा । राजराजो नागमुख स्सुधाकरविभाकरः ॥
त्रिणेत्रो भूर्जकः कूर्मः कुमुदः कार्मुकस्तथा । कपिलो ग्रन्थिकः पाशधरो डमरुगो रविः ॥
मुञ्जको भद्रकश्चेति शतं च त्रीण्यथाक्रमम् । विमानशिरोमणीनां नामान्युक्तानि शास्त्रतः ॥
व्योमयानोर्ध्वभागस्थशिरःकेन्द्रे यथाविधि । स्थापयेदुक्तमणिष्वेकैकं सुदृढं यथा ॥ ८८५ ॥
विद्युद्यन्त्रमुखात्सर्वतन्त्रीनाहृत्य शास्त्रतः । तन्मूले योजयेत्सम्यगेभ्यश्शक्त्यपकर्षणम् ॥
तस्योर्ध्वमुखपार्श्वेऽथ किरणाकर्षणान्दृढान् । पूर्ववद्योजयेत्पश्चात् मेळनार्थं द्वयोः क्रमात् ॥
इत्यादि ॥

एवमुक्त्वा यानशिरोमणिकार्यमतः परम् । वक्ष्ये किरणसंधानकीलकं शास्त्रतः स्फुटम् ॥
पञ्चविंशतिराख्याता श्शक्तिसंधानकीलकाः । तेष्वर्ककिरणयानसंधाने कीलकः क्रमात् ॥
कीर्त्यते संग्रहादत्र समालोच्य यथामति ॥

॥ तदुक्तं बृहत्कौण्डिके ॥

सन्धानकीलकाः पञ्चविंशतिः परिकीर्तिताः । सूर्यांशुयानसंधाने नवमस्तेषु [illegible] ।
तत्कीलकविवक्षार्थं तेषां नामान्यनुक्रमात् । बृहत्काण्डिकरीत्यात्र सुविचार्य [illegible] ॥
पिञ्जुळीकः कीरणको डिम्भको पार्वतीयकः । कच्छपो गारुडोद्दण्डो शक्तिपो [illegible] ॥
पवनास्यः पञ्चवक्त्रो वज्रकः कङ्कणस्तथा । अहिर्बुध्न्यः कुण्डलिको नाकुल[illegible] ॥
त्रिमुखस्सप्तशीर्षण्यो पञ्चावर्तः परावतः । आवर्तनाभिकोर्ध्वास्य शिलावर्त इति [illegible] ॥
विमानशक्तिसन्धानकीलकाः पञ्चविंशतिः । एतेषु गोविदारककीलकस्सुप्रकाश[illegible] ।
सूर्यांशुयानसन्धानकार्यनिर्वाहको भवेदिति ॥ ८९६ ॥
एवमुक्त्वा परिवेषक्रियायन्त्रमतः परम् । अङ्गोपसंहारयन्त्र स्संग्रहेण प्रचक्ष्ये ।

सूर्यादिसर्वग्रहाणां राशिसंस्थानतस्तथा । चारातिचार वक्रातिवक्रसञ्चारकारणात् ॥
भवेन्मेषादिराशिस्थशक्तिसंमथनं क्रमात् । तेनाकाशतरङ्गस्थशक्त्युद्रेको भवेत्स्वतः ॥
तयोस्सङ्घर्षणं पश्चात् जायतेऽत्यन्तवेगतः । तस्माच्छक्तिप्रवाहाश्चाग्निज्वालाप्रवाहवत् ॥
अनुलोमविलोमाभ्यां वक्रगत्यतिवेगतः । प्रवहन्ति विशेषेण राशिभोगानुसारतः ॥
सञ्चारकाले स्वपथे विमानाङ्गोपरि क्रमात् । तत्प्रवाहोष्णसंयोगो यदङ्गे स्याद्विशेषतः ॥
दग्ध्वा भस्मीकृतो भूयात्तदङ्गमतिशीघ्रतः । उष्णप्रमापकाद्यन्त्रात्तद्विज्ञायाथ वेगतः ॥
तदपायनिवृत्त्यर्थं तदङ्गमुपसंहरेत् । तस्मादङ्गोपसंहारयन्त्रमत्र प्रचक्ष्यते ॥ ९०४ ॥

॥ तदुक्तं यन्त्रसर्वस्वे ॥

घुम्रळीकं शोधयित्वा लोहं माञ्जीरमिश्रितम् । वितस्तिद्वादशायामं घनमष्टादशांगुलम् ॥
चतुरश्रं वर्तुलं वा पीठं कुर्याद्यथाविधि । कान्तडिम्भिकसंमिश्रलोहाद्द्रावकशोधितात् ॥
त्रिशद्वितस्त्युन्नतं च वितस्तित्रयगात्रकम् । मूले मध्ये तथा चान्ते छत्रीवत्कीलकान्वितम् ॥
दण्डमेकं कल्पयित्वा पीठमध्ये दृढं न्यसेत् । कीलकत्रयमारभ्य दण्डस्याधो यथाविधि ॥
विमानमूलमध्यान्तस्थाङ्गयन्त्रावधि क्रमात् । पञ्चकीलसमायुक्तान्सुदृढान्मृदुलानृजून् ॥
उपसंहारोद्धारकावर्तकीलैर्विराजितान् । मिश्रलोहकृतान्शुद्धान् शलाकान्विरलं यथा ॥
छत्रीशलाकवत्तत्तत्कीलकेभ्यः पृथक्पृथक् । तत्तद्रेखानुसारेण योजयेत्तदनन्तरम् ॥
त्रिचक्रकीलसंयुक्तं मुखत्रयविराजितम् । नाळद्वयसमायुक्तं भ्रामणीकीलकद्वयम् ॥
संस्थापयेद्दण्डमूलकीलकद्वयमध्यमे । तदुत्तरे रुक्मतैलं नळिकापात्रपूरितम् ॥ ९१३ ॥
लेपनार्थं कीलकानां स्थापयेद्विधिवत्ततः । यदङ्गस्योपसंहारः कर्तव्यमिति रोचते ॥
तत्क्षणाद्दण्डमूलस्थभ्रामणीं चालयेद्यदि । तेनाङ्गयन्त्रशलाककीलसञ्चालनं भवेत् ॥
छत्रीशलाकवत्तेन तच्छलाकमपि क्रमात् । प्रत्यङ्मुखं भवेत्तस्मात् अङ्गयन्त्रोपसंहृतिः ॥
प्रभवेदतिवेगेन न्यग्भावाच्चच्छलाकतः । पश्चात्प्राप्तापायनाशो भवत्येव न संशयः ॥
एवं क्रमेणाङ्गयन्त्रोपसंहारशलाकतः । तत्तत्कीलप्रचलनात्कर्तव्यं स्यात्पृथक्पृथक् ॥
यदङ्गस्योपरि भवेद्यानस्यापायसम्भवः । तदङ्गस्योपसंहारात्तदपायनिवारणम् ॥ ९१९ ॥
अनुलोमविलोमाभ्यां तत्तत्कीलकचालनात् । तत्तद्यन्त्रोपसंहारोद्धारश्चापि भवेत्क्रमात् ॥



एवमुक्त्वाङ्गोपसंहारकयन्त्रमतःपरम् । विस्तृतास्य क्रियायन्त्रः कथ्यतेऽत्र यथाविधि ॥
कूर्मादिग्गजभूमेघविद्युद्वारुणशक्तयः । यदा पद्ममुखे सम्यङ्मेळयन्ति परस्परम् ॥
तदा विषम्भरी नाम काचिच्छक्तिः प्रजायते । सा भित्वा भूमुखं पश्चादत्यन्तोष्णस्वभावतः ॥
लिङ्गत्रिशतवेगेनोड्डीयोड्डीयातिवेगतः । यावत्यूर्ध्वं खमाश्रित्य व्योमयानपथावधि ॥
व्याप्य यानपथं पश्चाद्विमानं च स्वशक्तितः । तत्रस्थसर्वलोकानां मेदश्शक्तिं निमेषतः ॥
विभज्य तत्क्षणात्तस्मिन् उद्गारं कुरुते क्रमात् । बुद्धिमान्द्यशिरोबाधज्वरदाहविरोचनाः ॥
संभवन्ति विशेषेण तत्क्षणात्तद्विकारतः । तद्विज्ञायाथ विधिवत् यन्त्राद्यैः शास्त्रतः क्रमात् ॥
उद्धरेत्तद्विनाशार्थं व्योमयाने यथाविधि । विस्तृतास्यक्रियायन्त्रमिति शास्त्रविनिर्णयः ॥
तस्माच्छास्त्रोक्तविधिना विस्तृतास्यक्रियाभिधम् । यंत्रमत्रातिसंक्षेपात्प्रसङ्गत्या निरूप्यते ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

बाहुप्रमाणं विस्तारे गात्रे द्वाविंशदंगुलम् । वर्तुलाकारतः पीठं कुर्यात्पिप्पलदारुणा ॥
बाहुप्रमाणगात्रं च द्वात्रिंशद्बाहुरुन्नतम् । स्तम्भं कृत्वा दारुमयं तन्मध्ये स्थापयेद्दृढम् ॥
व्योमयानाङ्गोपयंत्रसंख्यया विधिवत्क्रमात् । अङ्गोपयंत्रदिग्रेखामनुसृत्य यथाविधि ॥
स्तम्भमूलाद्या शिरोभागान्तं केन्द्रानुसारतः । प्रदक्षिणावर्तकीलाननुलोमविलोमतः ॥
स्तम्भस्य प्रतिकेन्द्रेऽथ स्थापयेद्द्वन्द्वतः क्रमात् । पश्चाद्विमानाङ्गोपयंत्रमध्यकेन्द्रमुखांतरे ॥
भस्त्रिकानाळतस्तम्भकीलद्वन्द्वावधि क्रमात् । सर्वत्र योजयेन्नाळान्कीलसंख्यानुसारतः ॥
तत्तदावर्तकीलानां संधिषु क्रमतः पुनः । द्विचक्रकीलकान्शुद्धान्योजयेत्सुदृढं यथा ॥९३६॥
तदधस्ताद्यथाशास्त्रं पक्षाघातकभस्त्रिकाः । संयोजयेत्ततः पीठमूलकेन्द्रमुखे क्रमात् ॥
त्रिचक्रभ्रामणीकीलयंत्रं संस्थापयेद्दृढम् । तत्पश्चादुपसंहारकीलकं च तथैव हि ॥९३८॥
संधारयेद्यथाशास्त्रं संप्रदायानुसारतः । आदौ पीठस्ततस्तम्भः पश्चादावर्तकीलकाः ॥
संधिनाळा द्रावशुद्धा स्सुदृढाश्च ततःपरम् । द्विचक्रकीलकाः पश्चात्पक्षाघातकभस्त्रिकाः ॥
तथा त्रिचक्रभ्रामणी कीलयंत्रमतःपरम् । उपसंहारकीलं चेत्यष्टधा संप्रकीर्तिताः ॥
यंत्राङ्गाण्येवमुक्त्वाथ तत्प्रयोगोऽभिवर्ण्यते । स्वतो विषम्भराशक्तिर्भूमिं भित्वातिवेगतः ॥
व्योमयानस्य सर्वाङ्गमाक्रम्य व्याप्यते यदा । व्योमयानाङ्गयंत्राणि विस्तृतास्यानि
तत्क्षणात् ॥ ९४३ ॥

कुर्यात्सम्पूर्णतश्शास्त्रविधिनातिप्रयत्नतः । त्रिचक्रभ्रामणीकीलमादौ तस्मात्प्रचालयेत् ॥
तेन द्विचक्रकीलाश्च सम्यग्भ्राम्यन्ति वेगतः । अतस्सम्यग्भ्रामकास्स्युः स्तम्भस्थावर्त-
कीलकाः ॥ ९४५ ॥
ततो द्विचक्रकीलस्थपक्षाघातकभस्त्रिकाः । तच्चक्रभ्रामणादेव विस्तृतास्या भवन्ति हि ॥
ततोऽतिवेगतो वायुरस्तन्मुखात्संप्रधावति । पश्चात् श्वासोच्छ्वासवत्तत्सन्धिनाळान्तरे क्रमात् ॥
प्रविश्य चातिवेगेन तद्वायुश्चरति स्वतः । तद्वाताघाततः पश्चादङ्गयन्त्रमुखस्थिताः ॥ ९४८ ॥
भस्त्रनाळा मध्यकेन्द्रे विस्तृतास्त्वेकधैव हि । भवन्ति तन्मुखात्पश्चात् भस्त्रिकावद्विशेषतः ॥
फूत्कारपूर्वकं वायुर्याति पूर्णप्रवाहवत् । तत्प्रवाहोऽतिवेगेन शक्तिं सम्यग्विषम्भराम् ॥
अपहृत्याकाशवातमण्डले संनियोक्ष्यति । ततो विषम्भरा शक्तिस्तत्रैव लयमेधते ॥
ततो विमानस्थजनमेधोरुङ्नाशनं भवेत् । एवं विषम्भराशक्तिं नाशयित्वा यथाविधि ॥
चालयेदुपसंहारकीलकं तदनन्तरम् । तेन यानाङ्गोपयंत्राण्यभूवन् पूर्ववत्क्रमात् ॥
विस्तृतास्यक्रियायंत्रप्रयोगश्चैवमीरितः । एवमुक्त्वा विस्तृतास्यक्रियायन्त्रं यथाविधि ॥
संग्रहाद्वैरूप्यदर्पणयंत्रमथोच्यते ॥

॥ वैरूप्यदर्पणयंत्रनिर्णयः ॥

विमाननाशनार्थं ये समागच्छन्ति शत्रवः । तेषां देहविरूपत्वं यस्य संदर्शनाद्भवेत् ॥
वैरूप्यदर्पण इति तमाहुः पण्डितोत्तमः । तद्दर्पणकृतं यंत्रं वैरूप्यादर्शयंत्रकम् ॥
इति शास्त्रेषु निर्णीतं यंत्रतत्वविदां वरैः । संग्रहेणात्र विधिवद्वक्ष्ये तद्रचनाविधिम् ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

यदा तु व्योमयानस्य विनाशार्थं तु शत्रवः । आगत्यावृत्य तिष्ठन्ति विमानं क्रूरकर्मिणः ॥
तेषां रूपविकारार्थं यन्त्रोऽयं परिकीर्तितः । पीठकेंद्रावर्तकीलज्योतिस्तम्भास्तथैव च ॥
विद्युद्यंत्रावर्तधूमनाळाश्चापि ततःपरम् । घोण्टिकातैलत्रिचक्रकीलकोशत्रयं तथा ॥
धूमदीपोपसंहारनाळौ चापि यथाक्रमम् । वैरूप्यादर्शयंत्रस्याङ्गानीत्याहुर्मनीषिणः ॥
वितस्तिद्वयविस्तारं वितस्तिद्वयमुन्नतम् । बैल्वेन वर्तुलं पीठं कुर्याच्छास्त्रविधानतः ॥



(16)

तस्मिन्द्वादशकेंद्राणि कल्पयेत्समरेखतः । आवर्तकीलकान् पश्चात्स्थापयेत्प्रतिकेंद्रके ॥
चतुर्विंशत्यंगुलावर्तगात्रं चोन्नतेतथा । वैरूप्यदर्पणकृतं ज्योतिस्तंभं यथाविधि ॥ ६० ॥
मध्यकेंद्रेप्रतिष्ठाप्य विद्युद्यंत्रं तदग्रतः । द्वितीयकेंद्रे विधिवत्स्थापयेत्कीलबंधनात् ॥ ६१ ॥
क्रमात्केंद्रत्रये पश्चादावर्तधूमनाळकान् । प्रदक्षिणाकारतंत्रीन् स्थापयेत्सुदृढंयथा ॥ ६२ ॥
घोंटिकातैलपात्रंतु कीलकेपंचमे न्यसेत् । [illegible] कोशत्रयमतःपरम् ॥ ६३ ॥
वितस्त्येकप्रमाणेन निर्मितं [illegible] । [illegible]धूमनाळावधिक्रमात् ॥ ६४ ॥
स्थापयेद्विधिवत्पश्चात् दृढं नवमकेंद्रके । धूमोपसंहारनाळंपश्चाद्दशमकेंद्रके ॥ ६५ ॥
दीपोपसंहारनाळंतथैकादशकेन्यसेत् । आवर्त तंत्रीनाळका[illegible]कं द्वादशकेंद्रके ॥ ६६ ॥
एवंसंधार्यत्रिधिवद्विनियोगस्ततः परम् । शत्रुरूपविकारार्थं [illegible] [illegible] क्रमात् ॥
निरूप्यैव यथाशास्त्रं यंत्रस्यरचनाविधिं । तत्प्रयोगविधि[illegible] संग्रहेण यथान्मति ॥ ६८ ॥
विद्युद्यंत्रात्समाहृत्य शक्तिमादौ यथाविधि । त्रिचक्रकीलयंत्रेष चोदयेत्सप्रमाणतः ॥ ६९ ॥
तेन भ्रामयति तद्यंत्रंस्वतो वेगात्स्वकेंद्रके । तद्वेगात्सर्वकेंद्रस्थ तत्तत्तंत्रीमुखात्पुनः ॥ ७० ॥
शक्तिसंचोदनात्सर्वावृत्तकीलाभ्रमंतिहि । त्रिचतुः पंचकेंद्रस्थ तंत्रीमार्गाद्यथाक्रमं ॥ ७१ ॥
शक्तिसंयोजनंकृत्वा कीलकभ्रमणं ततः । कुर्यात्तेनक्रमान्नाळत्रयं विकसितं भवेत् ॥ ७२ ॥
पश्चान्नवमकेंद्रावर्तकीलकभ्रमणं तथा । पूर्ववत्कारयेत्पश्चात्तेनकोशत्रयंक्रमात् ॥ ७३ ॥
विस्तृतंस्यात्ततःपंचमकेंद्रस्यावर्तकीलकम् । पूर्ववद्भ्रामयित्वाथशक्तिं तन्मार्गतःक्रमात् ॥
योजयेत्सप्रमाणेन घोंटिकातैलपात्रके । तत्तैलं विषधूमस्स्यात्समग्र शक्तिवेगतः ॥ ७५ ॥
कोशत्रयेश्चविधिवत्तद्धूमं पूरयेत्ततः । एकैककोशस्तद्धूम मेकैकधूमनाळिके ॥ ७६ ॥
पूरयेद्विधिवत्पश्चात्तत्तत्कालानुसारतः । अनुलोमविलोमाभ्यां धूमनाळद्वयात्ततः ॥ ७७ ॥
विषधूमंसमाहृत्य द्यौभागौशत्रुमंडले । संयोजयेत्ततस्तेनावरणं परिवेषवत ॥ ७८ ॥
बाह्यप्रदेशे शत्रूणां मंडलस्य भवेत्क्रमात् । घोंटिकातैलतः पश्चाद्दीपंकृत्वा यथाविधि ॥
ज्योतिस्तंभांतरे कीलबंधनात्स्थापयेद्दृढम् । ज्योतिस्तंभांतरं व्याप्य तत्प्रकाशस्समग्रतः ॥
आसमंताद्रक्तवर्णं जपाकुसुमवत्क्रमात् । करोतिपश्चात्तज्ज्योतिस्तंभस्योपर्यथाविधि ॥ ८१ ॥
संयोजयेत्सप्रमाणं विद्युद्भासमतः परम् । ज्योतिर्भानंसमाहृत्याविद्युद्भासःस्ववेगतः ॥ ८२ ॥
हरित श्वेतपीतादिसप्तवर्णविकारताम् । करोति तत्क्षणात्पश्चात्समग्रंस्तंभकेंद्रके ॥ ८३ ॥

ज्योतिस्तंभे भासमानविद्युद्दीपप्रकाशयोः । तृतीयधूमनाळेन धूममाकृष्यकोशतः ॥ ८४ ॥
विधिवद्योजयेद्वातनाळमार्गात्प्रमाणतः । विषधूमस्ततस्तेनदीपवत्संप्रकाशते ॥ ८५ ॥
तद्दीप्तभानमाहृत्यनाळमार्गाद्यथाविधि । ज्योतिस्तंभ पुरोभागस्थितवैरूप्यदर्पणे ॥ ८६ ॥
संयोजयेत्ततो दीपप्रकाशस्तं समग्रतः । व्याप्यवेगाद्विशेषेण कलात्रिशतभास्वरः ॥ ८७ ॥
भवेद्द्रष्टुमशक्यं च शत्रूणांस्तंभनं तथा । पुनः कोशत्रयाद्धूममाहृत्य विधिवत्क्रमात् ॥
शत्रुमंडलबाह्यस्थ परिवेषांतरेपुनः । संयोजयेत्पंचविंशल्लिंकमात्रं यथाविधि ॥ ८९ ॥
पश्चाद्धूमं तत्प्रकाशेधूमनाळांतरात्पुनः । संयोजयेदष्टविंशल्लिंकमात्रमतःपरम् ॥ ९० ॥
तद्धूमेनावृतं भानं शत्रूणामुपरिक्रमात् । व्याप्यतेषामंगसंधिं मेदःस्थानंचवेगतः ॥ ९१ ॥
मनाविकारतां नेत्रमांद्यं देहांगबंधनम् । दग्धवृन्ताकवद्देहं ज्वरदाहादिपीडनम् ॥ ९२ ॥
करोतितत्क्षणात्सर्वे मूर्छिताश्च भवंतिहि । पश्चाद्विमानं शास्त्रोक्तविधिनालाघवात्पुनः ॥
आकाशपरिधिरेखायां चोदयेत्पूर्ववत्सुधीः । एवमुक्त्वावैरूप्यदर्पणयंत्रक्रियांततः ॥ ९४ ॥
पद्मचक्रमुखंनाम यंत्रमद्यप्रचक्षते ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

पीठश्शंकुर्नाळदंडो विद्युत्तंत्रीस्तथैव च । सूक्ष्मदर्पणपत्राणि तथापद्मक्रियाविधिः ॥ ९६ ॥
पद्मप्रतिष्ठास्थानानि तद्यंत्रेथयथाक्रमम् । वाताकर्षणत्वग्भस्त्र कीलकाश्चतथैवहि ॥ ९७ ॥
संकोचनविकसनकीलकौच ततःपरम् । त्रिचक्रभ्रामणीयंत्रस्थापनानिर्णयस्तथा ॥ ९८ ॥
वातप्रवाहमार्गादि चोपसंहारकीलकम् । एते द्वादशयंत्रांगाणीतिशास्त्रविनिर्णयः ॥ ९९ ॥
वितस्त्यष्टकमायामं वितस्तित्रयमुन्नतम् । चतुरश्रं वर्तुलंवा पीठं पिप्पलदारुणा ॥ १०० ॥
प्रकल्प्य तस्मिन् द्वादशकेंद्रस्थानानिकारयेत् । रेखाप्रसारणंकुर्यान्मध्यकेंद्रात्समग्रतः ॥
मध्ये शंकुर्नाळदंडौ शंकुनोभयपार्श्वयोः । विद्युत्तंत्रीपूर्वकेंद्रे पद्मपत्राण्यथोत्तरे ॥ १०१ ॥
पत्राणांपद्मरचनादक्षिणोत्तरकेंद्रयोः । पद्मप्रतिष्ठा ईशान्यादाग्नेयांतरमतः परम् ॥ १०३ ॥
तत्पुरस्ताद्वातापकर्षणत्वग्भस्त्रिकास्स्मृताः । संकोचकीलकं तद्वत्तस्यवायव्यकेंद्रके ॥ १०४ ॥
तथाविकासकीलंच भवेन्नैऋत्यकेंद्रके । त्रिचक्रभ्रामणीकीलयंत्रः पूर्वमुखेस्मृतः ॥ १०५ ॥
वातप्रवाहमार्गाश्च प्रतिपद्मादधःक्रमात् । उपसंहारकीलं तद्दक्षिणेस्यादितीरितम् ॥ १०६ ॥



एवमंगद्वादशकं केंद्रद्वादशकेस्मृतम् । अथांगरचनामार्गस्संग्रहेणनिरूप्यते ॥ १०७ ॥
द्वादशांगुलगात्रंच वितस्तित्रयमुन्नतम् । अभ्रमृद्दर्पणात्कुर्याच्छंकुंशास्त्रविधानतः ॥ १०८ ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

रंभासत्वं पंचभागंतथैव मंजूषक्षाराष्टकं पंचकांतम् । क्रव्यादसत्वाष्टकमाढकस्य सत्वत्रयं कूर्मकसप्तसारम् ॥ १०९ ॥
मत्स्यत्वगष्टादशकुट्मलस्यक्षारत्रयं वैणविकाष्टसत्वम् । खुरत्रयं शून्यमृदष्टविंशत्त्विविक्रम-क्षारचतुष्टयंच ॥ ११० ॥
शंखद्वयं पारदपंचकंचक्षाराष्टकं वीरुधसारमेकम् । रौप्यत्रयं चांजनिकत्रयंचाष्टादशैते विधिवद्यथाक्रमम् ॥ १११ ॥
संशोध्यशास्त्राद्वरपर्णमूषामुखेथसंपूर्यवराटकुंडे । निक्षिप्यवेगाद्द्विशतोष्णकक्ष्यप्रमाणतो-गालयित्वाथशीघ्रं ॥ ११२ ॥
शनैश्शनैरुष्णरसं स्रुवांगात्संपूरयेद्यंत्रमुखोर्ध्वनाळे । एवंकृते त्वभ्रमृद्दर्पणंस्याद्दृढंसुसूक्ष्मं-सुमनोहरंच ॥ इत्यादि

बाहुदंडप्रमाणेनतद्दर्पणविनिर्मितौ । नाळदंडौ तथैवास्यावामदक्षिणपार्श्वयोः ॥ ११४ ॥
संस्थापयेद्दृढं पश्चाद्विद्युत्तंत्रीर्यथाक्रमम् । पूर्वकेंद्रादितस्सर्वत्रानुस्यूतं यथाभवेत् ॥ ११५ ॥
स्थापयेत्कीलनाळानां मध्यकुक्षौ यथाविधि । अभ्रमृद्दर्पण कृतपद्मपत्राण्यतःपरम् ॥ ११६ ॥
पंचाशदुत्तरशतमुदीचीकेंद्रतंत्रिषु । योजयित्वाथ विधिवत्स्थापयेद्द्विरळंयथा ॥ ११७ ॥
लल्लोक्तेनैव विधिना तत्पत्राणिप्रकल्पयेत् ॥

॥ तदुक्तं पट्टिकानिबंधने ॥

अभ्रमृद्दर्पणं पंचदशभागं तथैवच । चत्वारि सौरिकाक्षारं मेळयित्वा परस्परम् ॥ ११८ ॥
गालयित्वा यथापक्वं पट्टिकायंत्रकेन्यसेत् । लशुनत्वगिवात्यंतसूक्ष्माण्यावर्तरूपतः ॥
पश्चाद्भवंतिपत्राणिपद्मपत्रमिवक्रमात् । इत्यादि । तैः पद्मरचनार्थं तद्वामदक्षिणकेंद्रयोः ॥
पद्मप्रस्तारवत्कीलप्रस्तारंकारयेदथ । तत्पत्रतंत्रीनाहृत्य तत्तत्केंद्राद्यथाविधि ॥ १२१ ॥
पत्राहरणसंधान कीलकेषुपृथक्पृथक् । संधारयेत्तत्प्रस्तार मनुसृत्ययथाविधि ॥ १२२ ॥

॥ तदुक्तं क्रियासारे ॥

पत्राहरणकीलस्य चालनाद्वेगतःक्रमात् । प्रस्तारकीलसंधानानुसारेण यथाक्रमम् ॥ १२३ ॥
एकैकपत्रमायाति तत्तत्तंत्रिमुखात्पुनः । तथानुसंधानकील चालनात्पत्रसंचयः ॥ १२४ ॥
स्वतोभूत्वाभवेत्पद्माकारंपश्चान्मनोहरम् । नाळयत्प्रभवेदेकैकपत्रंचस्वभावतः ॥ १२५ ॥
एकैकपत्रनाळस्याघातपत्रद्वयं भवेत् । वाताकर्षणकीलंतुस्थापयेत्तन्मुखांतरे ॥ ११६ ॥
वातापकर्षणार्थाय तत्कीलं चालयेत्ततः । सीत्कारपूर्वकं वायुं तन्नाळः पिबतिस्वयम् ॥
पीतवायुंपुनर्नाळस्त्वतिवेगात्प्रमुंचति । आघातपत्रवर्गस्तद्वायुंनीत्वास्ववेगतः ॥ १२८ ॥
विमानाद्दूरतोबाह्यवायौसंमेळयेत्क्रमात् । इत्यादि । एवंनिर्मितपद्मानां यंत्रेस्थानविनिर्णयः ॥
उत्कंहि धुंडिनाथेन तदेवात्रनिरूप्यते ॥

॥ उत्कंहिसंधानपटले ॥

विमानप्रतिबंधकचंडवातनिवारणम् । लल्लोक्तपद्मसंधानाद्देवस्याद्धान्यथाभवेत् ॥ १३० ॥
तस्मात्पद्मानुसंधानस्थानानिप्रोच्यन्तेधुना । पूर्वस्यांदिशिईशान्यादाग्नेयांतं यथाक्रमम् ॥
पद्मानिस्थापयेत्सप्तकेंद्रेष्टविरळंयथा । सप्तकेंद्रस्थपद्मानां पुरोभागे यथाविधि ॥ १३२ ॥
एकैकपद्मनाळस्याधस्तात्सप्त यथाक्रमम् । क्षीरीत्वङ्निर्मितान्दीर्घवाताकर्षणभस्त्रिकान् ॥
स्थापयेत्सुदृढं पश्चात्द्विचक्रावर्तकीलकैः । यंत्रसंकोचकीलस्तु तस्यवायव्यकेंद्रके ॥ १३४ ॥

॥ तदुक्तं क्रियासारे ॥

अनुलोमान्मूलकीलं विलोमादूर्ध्वकीलकम् । यदासंभ्राम्यते वेगाद्यंत्रस्संकुचितोभवेत् ॥
षट्चक्रैर्विस्तृतैर्युक्तंपंचनाळविराजितम् । तथाद्वादशतंत्रीभिर्द्वादशास्यैश्चसंयुतम् ॥ १३६ ॥
द्वादशांगोपहरणकीलकैस्सुमनोहरैः । भ्राजमानंविस्तृतास्यमूर्ध्वाधो भागतस्तथा ॥ १३७ ॥
द्वाभ्यां भ्रमणकीलाभ्यां योजितं कमठाकृतिं । एतल्लक्षणसंयुक्तं यंत्रसंकोचकीलकं ॥
तत्कीलंस्थापयेद्यंत्रवायव्ये सुदृढं यथा । इत्यादि । एवंसंस्थाप्य सुदृढं यंत्रसंकोचकीलकं ॥
यंत्रविस्तृनकोलस्यस्थापनंचाभिवर्ण्यते ।



॥ तदुक्तं क्रियासारे ॥

क्रमाद्द्वादशचक्रास्यम् वर्तुळम् पूर्णकुंभवत् । नाळद्वादशकैरंतस्सशलाकैर्विराजितम् ॥
उत्क्षेपणक्रियावर्तकील द्वादशकैर्युतम् । वातप्रपूरणावर्त मध्यकीलकसंयुतम् ॥१३९-९६२॥
एतल्लक्षणसंयुक्तम् यंत्रविस्तृतकीलकम् । विस्तृतांगम् भवेद्यंत्रम् एतत्कीलकचालनात् ॥
तस्माद्यंत्रविकासकीलकम् नैऋत्यकेंद्रके । स्थापयेत्सुदृढम् पश्चाद्यंत्रपूर्वमुखेक्रमात् ॥
त्रिचक्रभ्रामणीकीलकप्रतिष्ठांच कारयेत् ॥

॥ तदुक्तं क्रियासारे ॥

दंतचक्रसमायुक्तम् दंडत्रयविनिर्मितम् । शिरोभागे शिंशुमाराकारवत्कृतदारुणा ॥ ९६५ ॥
संयोजितंतथाचोर्ध्वकीलचक्रैर्विराजितम् । भ्रामणीकीलकंप्रोक्त मेतल्लक्षणलक्षितम् ॥
एतत्संचालनादेव यंत्रसर्वांगचालनम् । भवेद्यंत्र विकासश्च तत्तत्कीलकचालनात् ॥
तस्मात्रिचक्रभ्रामणीकीलकम् पूर्वकेंद्रके । स्थापयेद्विधिनापंचशंकुताडनतोदृढम् ॥
इत्यादि ॥
वातप्रवाहमार्गास्तु पद्माधोभागसंधिषु । पद्मसंख्यानुसारेणकर्तव्यास्स्युः यथाक्रमम् ॥

॥ तदुक्तं क्रियासारे ॥

द्वादशांगुलमानास्यद्वारेणसुविकल्पितम् । द्वाविंशांगुलप्रमाणेनोन्नतेन समन्वितम् ॥९७०॥
त्वगावरणसंयुक्तम् कृतंपिप्पलदारुणा । वातप्रवहणार्थाय नाळसप्तकमीरितं ॥
वातप्रवाह नाळस्स्यादेतल्लक्षण लक्षितं । एकैकपद्ममूलस्थकीलकेषुयथाक्रमं ॥
संधारयेत्सप्तनाळान्तेनवातःप्रधावति ॥ इत्यादि ॥
अथोपसंहारकीलकं तद्दक्षिणकेंद्रके । स्थापयेत्सुदृढम् शुद्धम् द्वादशास्यं मनोहरं ॥
अदितेर्गर्भकोशीयसंधिस्थानेषुवेगतः । वसंतादिक्रमात्तत्तदृतुकालानुसारतः ॥ ९७५ ॥
जायंते चंडकूर्माद्याश्शक्तयो विषदारुणाः । वारुणीप्रेरणात्पश्चाद्वातस्तंभम् विशंतिहि ॥
महावातस्तंभकेंद्र वातस्त्रोत स्स्वतः परम् । भवेदत्यंतकल्लोलप्रवाहश्शब्दपूर्वकम् ॥

एतदाकाशपरिधिकक्ष्यावरण वायुषु । प्रविश्यात्यंतवेगेन करोति मथनंततः ॥
तत्प्रकोपाच्चंडवातप्रवाहो वेगतोभवेत् । यदाविमानोपरितद्वायुर्वातिविशेषतः ॥
कश्चिन्निर्यानवत्तस्मिन्पंकस्संजायते स्वतः । तत्संपर्काद्विमानस्थयंतॄणांस्यान्मसूरिका ॥९८०॥
शिथिलत्वं समायाति विमानस्यापि तत्क्षणात् । अतस्तद्वायुमाकृष्यविमानाद्बाह्यतः क्रमात् ॥
संचोदनार्थं त्रिचित्रपद्मपत्रमुखाभिधम् । यंत्रंसंस्थापयेत्तस्मात्तत्स्वरूपो निरूपितः ॥

॥ अथ कुंटिणीशक्तियंत्रनिर्णयः ॥

पद्मचक्रमुखं यंत्रमेवमुक्त्वायथाविधि । कुंटिणी शक्तियंत्रोथसंग्रहेणनिरूप्यते ॥
ग्रीष्मोष्मांशु समूहेषुत्रिपंचदशमेळनात् । कुळकाख्या महाशक्तिरत्यंतोष्माप्रजायते ॥

॥ तदुक्तं ऋतुकल्पे ॥

महाक्षोणित्रयं पश्चात्कोटीनामेकविंशतिः । लक्षाणांपंचसाहस्रं सहस्राणांतुषोडश ॥९८५॥
पश्चादेकोनत्रिंशत्संख्याकारसूर्यमरीचयः । प्रसरंति विशेषेणादितेर्ग्रीष्माख्यगर्भतः ॥
तेषां वर्गविभागस्तु वाल्मीकिगणिते क्रमात् । पंचकोट्यष्टसाहस्र सप्तोत्तरशतंस्मृतम् ॥
तेषामेकैकवर्गेथ विभागाश्शतधा कृताः । तेषु द्वितीयवर्गस्य विभागेषु यथाक्रमम् ॥
त्रिपंचदशमोष्म्यांशुमेळनंग्रीष्षमध्यमे । यदाभवतिग्रीष्मोष्मा कूर्मान्तंव्याप्यते स्वयम् ॥
पश्चात्कच्छपप्रम्लोच शक्त्याकर्षणतः क्रमात् । कुळकाख्याजायते काचिच्छक्तिर्ज्वलनवत्स्वतः ॥९९०॥
तत्संयोगो यदिभवेत् व्योम्नियानपथेक्रमात् । भस्मीकृतं भवेद्व्योमयानमत्यंतशीघ्रतः ॥
तदपायविनाशार्थं कुंटिणी शक्तियंत्रकम् । संस्थापयेद्यानकंठप्रदेशे संप्रदायतः ॥

॥ नारायणोपि ॥

ग्रीष्मोष्मकिरणवर्ग विभागेषुयथाक्रमम् । द्वितीयवर्गकिरणाः पंचाशीतिसहस्रकाः ॥
तेष्वष्टत्रिदशसंख्याकांशश्चोत्यंतमूष्मकाः । कूर्मस्थप्रम्लोच शक्त्याकर्षणेन स्वभावतः ॥



एकीभूययदाग्रीष्मे मिळितास्स्युः परस्परम् । तदासंजायतेकाचित्कुळिकाख्यामहत्तरा ॥
शक्तिरत्यंतोष्णरूपा त्वग्निज्वालावळीरिव । तत्संयोगोयदिभवेद्व्योमयानस्यतत्क्षणात् ॥९९६॥
भस्मीकृतं भवेद्व्योमयानमत्यंतशीघ्रतः । तदपायविनाशार्थंकुंटिणीशक्तियंत्रकम् ॥
संस्थापयेद्यानकंठप्रदेशे संप्रदायतः ॥ इति ॥

॥ लल्लोपि ॥

ग्रीष्मोष्म किरणवर्गविभागेषु यथाक्रमम् । द्वितीयवर्गे द्वात्रिंशद्विभागस्थांशुषुक्रमात् ॥
पंचत्रिदशसंख्याकाः किरणा ऊष्मरूपिणः । कूर्मस्थप्रम्लोचशक्त्याकर्षणेनस्वभावतः ॥
परस्परं सम्मिळिता भवेयुर्ग्रीष्मके यदा । तदासंजायते काचिच्छक्तिरुष्णस्वरूपिणी ॥
कुळकानामतद्वेगाद्विमानं नाशमेधते । तांनिवारयितुं शास्त्रे कुंटिणी शक्तियंत्रकम् ॥१००१॥
उक्तं तस्माद्व्योमयानेप्रतिष्ठांकारयेद्दृढम् ॥ इति ॥
अतस्तत्कुंटिणी शक्तियंत्रमत्रातिसंग्रहात् । तत्स्वरूपपरिज्ञानसिद्ध्यर्थंसंप्रचक्षते ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

व्योमयानांग यंत्रेषुकुंटिणीशक्तियंत्रकम् । ग्रीष्मकालीन कुळिकाशक्तिनाशार्थमुच्यते ॥
पीठ केंद्रावर्तकील द्रवपात्र पटोर्मिकाः । चक्रदंतिः क्षीरपट नाळावरणकीलकाः ॥१००५॥
विद्युत्तंत्रीसमायुक्तभ्रामणीचक्रमेवच । विस्तृतास्योपसंहारकीलकाचेत्यमीदश ॥
कुंटिणीशक्तियंत्रस्यांगानीतिविनिर्णयाः । यंत्रांगाण्येवमुक्त्वास्यप्रयोगस्संप्रचक्षते ॥
वितस्तित्रयविस्तारं वितस्त्यर्धोन्नतं तथा । चषकाकारवत्पीठं वर्तुलं कारयेद्दृढम् ॥
रचयेत्सप्तकेंद्राणितस्मिन्प्रागादितः क्रमात् । आवर्तकीलकान्पश्चात्सप्तकेंद्रेषु योजयेत् ॥
द्रवपात्रं मध्यकेंद्रे स्थापयेत्सुदृढं यथा ॥

॥ तदुक्तं क्रियासारे ॥

कुळकाकर्षणे गुंजागृध्निकाद्रावकं वरं । तथैवश्येनकर्माणं चापि श्रेष्ठतमंविदुः ॥१०१०॥
नागक्रौंचिकसौरंभलोहाद्यैः कृतदर्पणात् । निर्मिते चषकाकार प्रात्रे पश्चाद्यथाविधि ॥

संपूरयेत्सप्रमाणं गुंजामृक्षिकद्रावकम् । शोधितंश्येनकर्माणं सूतंचापिनिवेशयेत् ॥
पश्चात्संस्थापयेद्यंत्रमध्यकेंद्रे यथाविधि । आहृत्यादित्यकिरणान् पश्चात्तस्मिन्नियोजयेत् ॥
तदंशुवेगात्तत्पात्र द्रावकस्थमणौक्रमात् । क्रौंचिनीनामिकाकाचि च्छक्तिरत्यंतशीतला ॥
उद्भूयव्याप्य सर्वत्र कुळिकाभिमुखी भवेत् । पश्चात्तत्कुळिकाशक्तिस्तदाकर्षणतस्स्वयं ॥
पतत्यत्यंतवेगेनपात्रस्थद्रावकेक्रमात् । अथ तत्कुळिकाशक्तिं मणिःपिबतितत्क्षणात् ॥
इत्यादि ॥१०१६॥

तथैवस्थापयेद्भ्रामकेंद्रे पश्चात्पटोर्मिकान् ॥

॥ तदुक्तं पटकल्पे ॥

गुंजागृक्षिकद्रावस्थ मणिपीतां महोष्णिकां । संरोद्धुं कुळिकाशक्तिं तन्मणावेवतेजसा ॥
अत्यंतसूक्ष्मान्सुदृढान् लाक्षावर्णविराजितान् । पंचावरणसंयुक्तानास्यत्रयसमन्वितान् ॥
गौरीजटाशणमयपटतंतुविनिर्मितान् । विरंचिद्रवसंशुद्धान्सप्रकाशान्पटोर्मिकान् ॥
समाहृत्याथ विधिवत्प्रादक्षिण्यक्रमात्पुनः । यथासमाच्छादितंस्यात्द्रवपात्रमणिस्तथा ॥
एवंसंधार्य विधिवत्तदास्यत्रयमूलतः । अत्यंतसूक्ष्मानादर्शकृतनाळानधोमुखान् ॥१०२१॥
संधारयेत्सूक्ष्मकीलैः पश्चात्तेषु यथाविधि । मुखपात्राण्यथाशास्त्रंविस्तृतानिनियोजयेत् ॥
इत्यादि ॥

ततोद्रावकपात्रस्यैशान्येतु यथाविधि । संस्थापयेच्चक्रदंतिं कुळिकाकर्षणोन्मुखं ॥

॥ तदुक्तं क्रियासारे ॥

कुळिकाशक्तिपानार्थं चक्रदंतिंप्रकल्पयेत् । सर्पत्वक्सृणिनिर्यासोर्णतंतुलघुतृणैः ॥
पटवत्पाकभेदेननिर्मितंदर्पणंक्रमात् । संशोध्यविधिवच्छुंडिद्रावकेणयथाविधि ॥१०२५॥
कृत्वा बिलेशयस्स्वांगंचक्राकारेणवर्तुलम् । शेते यथा तथाकृत्वापश्चात्संस्थापयेद्दृढम् ॥
अथ तत्पूर्वोक्तनाळानतिसूक्ष्मान्यथाविधि । संधारयेद्दंतिमूलेह्यविनाभावतःक्रमात् ॥
एवमुक्त्वा चक्रदंतिनाळसंधाननिर्णयं । अथेदानीं क्षीरपटनाळस्थापनमुच्यते ॥



॥ तदुक्तं क्रियासारे ॥

क्षीरीपटेन रचितम् विस्तृतास्यम् दृढं मृदु । नाळमेकम् चक्रदंतिमुखादावर्तनक्रमात् ॥१०२९॥
परिवेष्ट्यतदास्यंतु पीठछिद्रेनियोजयेत् । तद्द्वाराकुळिकाशक्तिर्बहिर्निर्गच्छतिक्रमात् ॥
तस्मात्संस्थापयेत्क्षीरी पटनाळमितीरितम् ॥ इत्यादि ॥
स्थापयित्वाक्षीरनाळपटमेवंसकीलकम् । विद्युत्तंत्रीसमायोगाद्भ्रामणीचक्रकीलकम् ॥
सर्वांगभ्रमणंयंत्रे तत्तत्कीलकमार्गतः । यथाभवेत्तथाकीलैस्स्थापयेत्पश्चिमांतरे ॥
एवंसंस्थाप्य विधिवद्भ्रामणीचक्रकीलकम् । तस्येशान्यां विस्तृतास्यकीलकंस्थापयेद्दृढम् ॥

॥ तदुक्तं क्रियासारे ॥

कोशद्वयसमायुक्तम् मुखद्वयविराचितम् । प्रदक्षिणाप्रदक्षिण कीलचक्रसमन्वितम् ॥१०३५॥
प्रादक्षिण्येन पूर्वास्ये कीलचक्रद्वयंतथा । विलोमेनोत्तरास्ये च स्थापयेच्चक्रकीलकम् ॥
छत्रीशलाकवत्सर्वकीलव्याप्य शलाककम् । एतल्लक्षणसंयुक्तम् विस्तृतास्याख्यकीलकम् ॥
इत्यादि ॥

पूर्वास्यकीलभ्र .गात्सर्वांगा विस्तृताः क्रमात् । तथा मुकुळितांगास्स्युरुत्तरे कीलकभ्रमात् ॥
एवंक्रमेणोपसंहारकीलकम् च यथाक्रमम् । संधारयेद्यथाशास्त्रम् यथायंत्रोपसंहृतिः ॥इत्यादि॥
यंत्रांगाण्येवमुक्त्वाथ तत्प्रयोगोभिवर्ण्यते । विद्युत्कीलकसंधानमादौकुर्याद्यथाविधि ॥१०४०॥
तेनस्याद्भ्रामणी चक्रभ्रमणम् वेगतस्ततः । तेनसर्वावर्तकीलान्क्रियाकालानुसारतः ॥
भवेद्भ्रामयितुम् सम्यक्सप्रमाणम् यथाविधि । कर्तव्यकर्मरचनातत्तत्कीलभ्रमादिति ॥
द्रावकेच मणौपश्चाद्विद्युच्छक्तिंप्रयोजयेत् । संयोजयेत्सूर्यकिरणानाहृत्यास्मिन्तथैवहि ॥
सूर्यांशु विद्युत्संपर्काद्द्रावकेच मणौक्रमात् । भवेच्छीतघनस्तस्मि न्स्व शक्तिस्सौळिका-
भिदा ॥

जायतेद्रवसंसर्गात् पंचन्यंकप्रमाणतः । तथैव मणिसंसर्गात्पुंशक्तिश्शुळिकाभिधा ॥१०४५॥
अष्टन्यंकप्रमाणेन जायतेत्यंतवेगतः । विद्युत्संयोजनात्पश्चात्तयोस्संमेळनंभवेत् ॥
तत्संमेळनतः काचिच्छक्तिरत्यंतशीतला । जायते क्रौंचिनीनाम कुळकाकर्षणक्षमा ॥

अथ तच्छक्तिमाहृत्य कुळिकाभिमुखंयथा । भवेत्तथा नाळमुखात्प्रेरयेत्सप्रमाणतः ॥
जतुपिंडे यथागुंजा कुळिकायां तथैवहि । क्रौंचिनी शक्तिसंयोगम् कारयेद्विधिवत्क्रमात् ॥
अथतांक्रौंचिनीशक्तिस्समाकर्षति वेगतः । तदाकर्षणतः पश्चात् कुळिकाद्रावकेक्रमात् ॥
पतत्यत्यंतवेगेनतांमणिः पिबतिस्वयम् । ततःप टोलिकाकीलभ्रमणम् कारयेत्क्रमात् ॥१०५१॥
पटोर्मिको विस्तृतास्यः प्रभवेत्तेनसत्वरम् । नभवेद्वातसंयोगस्सुतरां तन्मणौयथा ॥
आच्छादयेत्तथासम्यक्तन्मणिंसंप्रदायतः । ततः परम् चक्रदंतिकीलकंभ्रामयेच्छनैः ॥
तस्माद्विकासमायाति चक्रदंतिमुखंक्रमात् । मणिद्रावकमध्मस्थामत्युष्णांकुळिकांततः ॥
चक्रदंतिर्मुखात्पीत्वास्वगर्भेसंनिधास्यति । संपूरितंभवेत्पश्चाच्चक्रदंतिगुहाशये ॥ १०५५ ॥
ततस्सूक्ष्मादर्शनाळकीलकम् भ्रामयेत्क्रमात् । चक्रदंत्यंतर्गतासा कुळिकातेनवेगतः ॥
नाळत्रयाकर्षणेन बहिर्यातिशनैश्शनैः । यदानाळत्रयाकर्षणोन्मुखासाभवेत्तदा ॥
सम्यक्संभ्रामये द्विस्तृतास्यकीलम् यथाविधि । तेनांगान्यथयानस्य विस्तृतानि भवंतिहि ॥
तस्मात्तत्रत्यकुळिका बहिर्यात्यपकर्षणात् । पश्चात्तत्कुळिकाशक्तिर्निश्शेषम् नाशमेधते ॥
ततोपसंहारयंत्रकीलकंचालयेत्सुधीः । तेनसर्वांगोपसंहारस्स्यादेकैकतःक्रमात् ॥१०६०॥
पश्चाद्यंत्रस्स्वस्वरूपम् लभतेपूर्ववत्स्वयम् । एवमुक्त्वासमासेन कुंटिणीशक्तियंत्रकम् ॥
अथेदानीं पुष्पणीक यंत्रमत्रनिरूप्यते ॥

॥ अथ पुष्पणी यंत्रनिर्णयः ॥

वसंतग्रीष्मर्तुकाल प्रयाणेयानयंतृणां । सुखशैत्योपचारार्थं पुष्पणीयंत्रमुच्यते ॥

॥ उक्तं हि खेटविलासे ॥

ग्रीष्मेपंचशिखाशक्तिर्वसंते सौरिकाभिधा । वायव्याग्नेयकेंद्राभ्यामीषादंडस्यवेगतः ॥
जायतेसूर्यकिरणसंसर्गादूष्मरूपतः । तयोः पंचशिखाशक्तिर्विषद्वयविराजिता ॥
अग्नीषोमात्मिकासौरीसमशीतोष्णरूपिणी । अंतश्शीतळतामेत्यबाह्येत्यंतोष्णरूपतां ॥
निदाघंकुरुतेसर्वसृष्टिवर्गेषु वेगतः । स्वेदोद्रेकम् मनुष्येषु निर्यासम् वृक्षवर्गके ॥१०६६॥
करोतितेनसर्वेषां सर्वामयविनाशनम् । एवं स्वशीतळीशक्त्यासर्वत्रव्याप्यपूर्ववत् ॥



आकृष्य सूर्यकिरणस्थितवासंतिकांततः । वसंतेनर्तुनेत्यादि श्रुतिवाक्यानुसारतः ॥
कृत्वाभिषेकंपश्चात्तध्दृदिकोशाष्टकेपिच । प्रभापल्लवपुष्पादीन्करोत्यगलतादिषु ॥
तथैवप्राणिनांदेहसप्तधात्वादिषुक्रमात् । बलदार्ढ्यप्रकाशादीन्संप्रयच्छतिपुष्कलम् ॥
तथापंचशिखाशक्तिर्विषरूपाहिगृध्निका । स्थावरंजंगमंव्याप्य तद्धातून्सप्तशोधयेत् ॥१०७१॥
तथैव मारिकानाम शक्तिरन्या स्वभावतः । स्थावरेकांडवल्कांश्च हृत्कोशान्पंचजंगमे ॥
संकोचंकुरुतेसम्यक्तेनपुष्टिविनाशनम् । अतः पंचशिखावेगम् सौर्युष्णम् च विशेषतः ॥
नाशयित्वा विमानस्थ यंतृणामूष्मभाजिनाम् । सुखशैत्याह्लादहर्षप्रदानार्थं यथाविधि ॥
विमानस्यांगयंत्रेषु पुष्पणीयंत्रमुच्यते । पंचांगान्यस्य शास्त्रेषु प्रोक्तानिज्ञानवित्तमैः ॥
तान्येवात्रप्रवक्ष्यामि समालोच्ययथामति । आदौपीठम् ततश्शीतरंजिकादर्शकीलकम् ॥
शीतप्रसूतिकमणिर्द्रवपात्रंतथैवच । शतारविद्युत्पंकश्चेत्यंगानां पंचवर्णितम् ॥१०७७॥
पंचांगान्येवमुक्त्वा तद्रचनार्थं यथाविधि । आदौनिरूप्यते सुंदमृत्काचोत्पत्तिनिर्णयः ॥

॥ तदुक्तं पार्थिवपाककल्पे ॥

लवणिक शिंजिरशल्यक्रमुकक्षारदुरोणकुरुविंदान् । निर्यासमृद्धिरंचिकवटिकसुपिं
छालमुंजिकाक्षारान् ॥

बाणार्कनेत्रवह्निवसुमुनिरुद्रोडु भागांशान् । संपूर्यमूषगर्भेद्वात्रिंशत्पाकतोष्णकक्ष्यशतात् ॥
संस्थाप्यकूर्मकुंडेद्विमुखीभस्त्रात्सुगालयेद्वेगात् । यंत्रोर्ध्वनाळमध्ये तद्रसमाहृत्य-
पूरयेत्पश्चात् ॥१०८१॥

एवंकृतेतिशुद्धः प्रभवतिसूक्ष्मश्चसुंदमृत्काचः ॥ इत्यादि ॥
इत्युक्त्वासुंदमृत्काचमथांगरचनाविधिः । निरूप्यतेत्रविधिवत्संग्रहेणयथाक्रमम् ॥
द्वात्रिंशत्पाकसंशुद्ध सुंदमृत्काचतोदृढम् । द्वादशांगुलमायाममंगुलत्रयमुन्नतम् ॥
चतुरश्रंवर्तुलंवापीठंकुर्याद्यथाविधि । तस्मिन्चत्वारिकेंद्राणिकल्पयेन्मध्यतः क्रमात् ॥
मध्यकेंद्रे बाहुमात्रम् सुंदमृत्काचनिर्मितम् । शंकुंसंस्थापयेत्पश्चात्तस्योपरि यथाविधि ॥१०८५॥
संधार्यसुदृढम् शीतरंजिकादर्शकीलकम् । शीतप्रसूतिकमणिं तन्मध्येसुस्थिरंन्यसेत् ॥
तत्पूर्वकेंद्रे विधिवद्द्रवपात्रंनियोजयेत् ॥

॥ द्रवपात्रमुक्तं क्रियासारे ॥

द्वादशांगुलविस्तारंद्वादशांगुलमुन्नतम् । चषकम् वर्तुलाकारम् नारिकेळकठोरवत् ॥
सुदृढंकारयेच्छीतदर्पणेन यथाविधि ॥ इत्यादि ॥
शीतरंजिकदर्पणमुक्तम् दर्पणप्रकरणे । शशपिस्थम् चोडुपिस्थम् प्राणक्षारम् च कुट्मलम् ॥
ज्योत्स्नासारम् शीतरम कंदपिष्टमतःपरम् । कुडुपक्षार मभ्रस्यसारक्षारम् तथैवच ॥१०९०॥
शौंडीरकाजंबशल्यचूर्णंवातोषरंतथा । श्वेतनिर्यासमृत्सार मुरघश्वेतिद्वादश ॥
ताराग्निबाणोडुदशदिग्रुद्रवसुसागराः । द्वाविंशत्षड्विभागांशास्तेषां शास्त्रेनिरूपिताः ॥
एतानाहृत्यसंशुद्धान्तत्तद्भागानुसारतः । पूरयित्वापद्ममुखमूषायां पद्मकुंडके ॥
तन्मूषांविन्यसेत्पश्चाद्दृढमिंगालपूरिते । त्रयोविंशदुत्तरत्रिशतकक्ष्योष्णमानतः ॥
गालयित्वा पंचमुख भस्त्रेणात्यंतवेगतः । तद्द्रसंयोजयेद्यंत्रस्योर्ध्वनाळमुखेशनैः ॥१०९५॥
भवेदेवंकृते शीतरंजिकादर्शमुत्तमम् ॥ इत्यादि ॥

॥ शीतप्रसूतिकमणिरुक्तः मणिप्रकरणे ॥

वराटिकामंजुळचूर्णपंचकम् औदुंबरक्षारचतुष्टयंतथा । रुब्णत्रयंवर्चुलकाष्टकंचशीतरंजिका-
दर्शकसप्तकंतथा ॥
वट्टुत्रयंशाल्मलिकाष्टविंशतिः क्षारत्रयंपारदभागसप्तकम् । श्वेताभ्रसत्वाष्टककर्कटांघ्रिक-
क्षाराष्टकंघौळिकसत्वपंचकम् ॥
निर्यासमृत्तंचदशांशकंतथासंपातिजंघास्थिच पंचविंशतिः । चतुर्दशैतान् परिगृह्यशोधितान्
संपूर्यमृत्कुंडलमूषिकामुखे ॥
संस्थाप्यपश्चात्कुलकुंडिकांतरेवेगात्ध्मनेत्र्यंबकभस्त्रिकामुखात । संगाल्यपश्चात्त्रिशतोष्ण-
कक्ष्यतोमणिप्रसूतास्यमुखेप्रपूरयेत् ॥
एवंकृतेशीतप्रसूतिकमणिर्भवेत्सुशुद्धस्सुदृढस्सुशीतलः ॥ इत्यादि ॥
विद्युत्तंत्र्यासमायुक्तं द्रावकत्रयशोधितम् । शतारविद्युत्पंकंततपुरतः स्थापयेद्दृढम् ॥११००॥



(19)

॥ तदुक्तं क्रियासारे ॥

द्वादशार्कंचांजनिकत्रयंक्ष्विंकाष्टकम् तथा । संमेळयगालयेत्सम्यक्शतकक्ष्योष्णमानतः ॥
तद्भवेत्स्वर्णवच्छुद्धमारारंपीतवर्णकम् । अत्यंतलघुसूक्ष्मम च मृदुळंसुदृढंशुचि ॥
पंचलोहमितिप्राहुरेतम् तच्छास्त्रवित्तमाः । तस्मात्प्रकल्पयेत्पत्रशतम् कमलपत्रवत् ॥
तथानाभित्रयम् कीलत्रयम् तंत्रीत्रयंक्रमात् । घंटारकीलकंचैवकारयेच्छास्त्रमानतः ॥
सकीलकशलाकाभिस्संयुतम् सुमनोहरम् । नाभि चक्रत्रयंतस्मिन्नादौसंधारयेद्दृढम् ॥११०५॥
शतपत्रभ्रमोवेगादनुलोमाद्यथाभवेत् । चतुःपार्श्वेषु चक्रस्यविधिवद्योजयेत्क्रमात् ॥
तथैवतत्पुरोभाग चक्रपार्श्वेष्वपिक्रमात् । संधारयेत्पत्रशतम विलोमभ्रमणम यथा ॥
तत्पश्चाद्भागचक्रस्य नाभिमूलेयथाविधि । विद्युत्तंत्रींसमाहृत्यपार्श्वयो रुभयोरपि ॥
शतारविद्युत्पंकस्य भ्रमणार्थं नियोजयेत् । पश्चात्संपूरयेत्पात्रे शीतप्रसवद्रावकम् ॥
विद्युत्तंत्र्यासमावेष्ट्य शीतप्रसवकंमणिम । द्रवपात्रांतरे पश्चात्स्थापयेन्मध्यकेंद्रके ॥१११०॥
क्षीरीपटांतर्गतौदुंबरतंत्रीन्यथाविधि । द्रवपात्रस्थतंत्र्यग्रेपश्चात्संधारयेत्समम ॥
तत्प्रदेशात्समानीयतंत्रीद्वयमतःपरम् । यंत्रमध्यस्थितशीतरंजिकादर्शकीलके ॥
अनुलोमप्रकारेण सकीलंयोजयेत्ततः । मणिद्रावकसंबद्धविद्युतंत्री मुखाच्छनैः ॥
शक्तिसंयोजयेत्सम्यक् मणिद्रावकयोःक्रमात् । पश्चाच्छक्तिद्वये वेगाद्विद्युत्संयोगतःपुनः ॥
तन्निष्ठसुखशैत्यास्वभावशक्तिः यथाक्रमम् । तच्छीतरंचिकादर्शकीलमाक्रम्यवर्तते ॥१११५॥
तत्कीलभ्रमणाद्व्योमयानमावृत्यवेगतः । तच्छक्तिर्यंतॄणांग्रीष्मविषशक्तिं निमेषतः ॥
विहृत्यसुखसंतोषमेधोवृध्यादिकान्क्रमात् । प्रयच्छतिविशेषेणमकरंदामृतंयथा ॥
ततश्शतारपंकभ्रमणम् तंत्र्याप्रकाशयेत् । तेनवायुर्विशेषेण प्रादुर्भूययथासुखम् ॥
व्योमयानस्थ यंतॄणाम् सर्वेषामुपरिस्वतः । मंदंमंदंप्रसरति मंदमारुतवत्क्रमात् ॥
तेनसौर्योष्णसंतापोनिश्शेषंनाशमेधते । मणिद्रावकपंकेभ्योव्योमयानस्थयंतॄणां ॥११२०॥
सुखशैत्याह्लादहर्षाएवंसंभवतिस्वतः । देहस्थसप्तधातूनां भवेत्तस्मात् शुचिर्बलम् ॥
तस्मात्सर्वप्रयत्नेनयानदक्षिणकेंद्रके । स्थापयेत्पुष्पिणीयंत्रम् शास्त्रोक्तविधिनादृढम् ॥
तदधः स्थापयेत्पश्चात् तत्रघंटारकीलकम् । सौरीपंचशिखोत्पन्न शक्तयो विषरूपकाः ॥
घंटारकीलकमुखादाप्नुयुर्बाह्यकेलयं ॥ इत्यादि ॥

॥ अथ पिंजुळादर्शनिर्णयः ॥

एवमुक्त्वा पौष्पिणिकयंत्रंप्रव्याचयथाविधि । पिंजुळादर्शस्वरूपम् उच्यते शास्त्रतःक्रमात् ॥
वातद्वयावर्त शक्तिसंधौसूर्यांशुघट्टनात् । भवेत्कुलिशवत्सूर्यातपनिपातनम् ॥१९२५॥
तदपाय निवृत्त्यर्थंपिंजुळादर्शकम् न्यसेत् । कुर्यादष्टदळाकारम् पद्मंपिंजुळदर्पणात् ॥
दळसंधौतुवार्तुळ्यम् दंडाकारंप्रकल्पयेत् । शंकुकीलद्वयम् तस्यपश्चाद्भागे प्रकल्पयेत् ॥
तंसमावेष्टयेच्छीतरंजिकादर्शतंत्रिभिः । पृष्ठमाच्छादयेत्पश्चान्मौंजिकापटकोशतः ॥
बाहुमात्रोर्ध्वतरसूर्यकिरणाभिमुखंयथा । विद्युत्तंत्रीसमायुक्तशंकुकीलद्वयादथ ॥
विमानदक्षिणकेंद्र शलाकोर्ध्वमुखेदृढम् । स्थापयेत्पिंजुळादर्शं किरणाकर्षणोन्मुखम् ॥
तेनमेघोभित्वृद्धिश्चप्राणत्राणनमेवच । आतपाशनिवेगापकर्षणाद्यानयंतृणाम् ॥११३१॥
भवेत्स्वभावतः पश्चात् तापश्शीतळतांव्रजेत् । तस्मात्सर्वप्रयत्नेनव्योमयाने यथाविधि ॥
स्थापयेत्पिंजुळादर्शं यंतृणांप्राणदायकम् ॥ इत्यादि ॥

॥ अथ नाळपंचकनिर्णयः ॥

उक्त्वैवम् पिंजुळादर्शस्वरूपम् विधिवत्ततः । पंचवातायिनीनाळस्वरूपमथवर्ण्यते ॥

॥ तदुक्तं वातायनतंत्रे ॥

विमाने पाकचुल्लीक धूमस्संव्याप्यतेयदा । तस्यनिर्गमनार्थायनाळपंचकमुच्यते ॥
जत्वनिकपिंजुळकाभ्रम घोंटारंधूमपास्यकूर्मतनू । रुद्रार्कबाणतारकवसुभागांशान्यथोक्तसं-
शुद्धान् ॥११४०॥
मूषामुखेनपश्चात्वेगात्संगालयेच्छतोष्णकक्ष्येण । एवंकृतेतिमृदुलरसूक्ष्मोलघुतैललेपवच्छुद्धः ॥
वातायनीयलोहःप्रभवतिसुदृढस्सुवर्णसदृशाभः ॥ इत्यादि ॥
द्वादशांगुलविस्तीर्णान्द्वादशांगुलमुन्नतान् । कुर्याद्वातायनीलोहात्पंचनाळान्यथाविधि ॥
एकैकधूमपमणिं नाळमूलेषुपंचसु । संधार्यव्योमयानस्य वामपार्श्वमुखेक्रमात् ॥
संस्थापयेत्पंचनाळान्पंचसंधिषु शास्त्रतः । मुखानिपंचनाळानांदिक्षुपूर्वादिषुक्रमात् ॥
स्थापयेद्विधिवत्पश्चाद्धूर्ध्वेतूर्ध्वमुखंयथा । नाळमूलस्थमणयः पश्चाद्धूमं शनैश्शनैः ॥१०४५॥



आकृष्यनाळमूलस्थमुखच्छिद्रेषुयोजयेत् । ततोवातायनीनाळमुखेभ्योवेगतः क्रमात् ॥
निश्शेषंयातितद्धूमो बाह्येविलयमेधते । तेनयानस्थयंतृणांधूमनाशात्सुखंभवेत् ॥
तस्माद्विमाने तन्नाळपंचकं विधिवन्न्यसेत् ॥ इत्यादि ॥
नाळपंचकमुक्त्वैवम् संग्रहेणयथाविधि । गुहागर्भादर्शयंत्रमिदानींसंप्रचक्षते ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

विमानखंडनार्थाय शत्रुभिर्भूमुखांतरे । महागोलाग्निगर्भादि यंत्रपंचकमद्भुतम् ॥
यत्रयत्ररहस्येनस्थापितं सर्वतोमुखं । तत्स्वरूपपरिज्ञानसिद्ध्यर्थं शास्त्रतःक्रमात् ॥१०५०॥
गुहागर्भादर्शयंत्रम् स्थापयेद्व्योमयानके ॥

॥ तदुक्तं क्रियासारे ॥

द्वासप्ततिमसंख्याकादर्शमाहात्म्यशास्त्रतः । त्रिकोणवर्तुळचतुष्कोणाकारैर्यथाविधि ॥
त्रिधाकृत्वा ततोंजिष्ठवृक्षकाष्ठविनिर्मिते । नीडेसंधार्यपूर्वोक्तदर्पणान्सुदृढम् यथा ॥
पंचधारालोहकृत शंकुभिस्सुदृढैःक्रमात् । बंधयित्वाथपूर्वोक्तकाष्ठयंत्रे नियोजयेत् ॥
अधोमुखम् वर्तुळादर्शमधस्तात्प्रकल्पयेत् । चतुष्कोणादर्शमूर्ध्वास्यंयथासन्नियोजयेत् ॥
त्रिकोणदर्पणम् तद्वदुभयोः पश्चिमांतरे । संस्थापयेत्पंचमुखकीलीयोगाद्यथाक्रमम् ॥१०५५॥
चतुष्कोणादर्शमूलकेंद्रशंकुमुखांतरात् । यंत्रपीठाग्नेयकेंद्रशंकुमूलांतरावधि ॥
रविखर्परपंचास्यलोहमिश्रिततंत्रिभिः । संधारयेद्दृढंपश्चात्पारग्रंधिकद्रावके ॥
स्थापयेच्चुंबकमणिं तंत्रीमूलानितन्मुखे । प्रसार्यविधिवत्तस्मात्तंत्रीनन्यान्चतुःक्रमात् ॥
त्रिकोणादर्शमावृत्य ऊर्ध्वास्यादर्शमध्यतः । अधोमुखादर्शमध्य केंद्रस्थानेदृढम् यथा ॥
संधार्यविधिवत्पश्चात्सूर्यांशून्पार्श्वतः क्रमात् । शक्तिपश्चिमदिग्भागाच्चोदयेत्सप्रमाणतः ॥
बिंबाकर्षणनिर्यास लेपितंपटदर्पणम् । त्रिकोणादर्शाभिमुखंयथा तत्र नियोजयेत् ॥११६१॥
पूर्वोक्तसूर्यकिरणान्शक्त्यासहततः परम् । द्रावकस्थमणौसम्यग्योजयेत्सर्वतोमुखम् ॥
अधोमुखेततश्शुद्धे वर्तुलाकारदर्पणे । मणिस्थानात्समाहृत्य तदंशून्शक्तिमिश्रितान् ॥
प्रसार्य सप्रमाणेन पश्चात्तान्मुखकेंद्रतः । यानसंचारमार्गाधस्स्थितभूम्यांप्रयोजयेत् ॥

पश्चात्तत्किरणास्सम्युक्शक्त्यासह स्ववेगतः । प्रविश्यभूमुखम् तत्र सर्वत्रस्थापितंक्रमात् ॥
महागोलाग्निगर्भादियंत्रान् व्याप्याथशक्तितः । सम्यगावृत्यसांगानि तत्स्वरूपाण्यथा-
स्फुटम् ॥११६६॥
पूर्वोक्तद्रवमध्यस्थमणावूर्ध्वमुखम् यथा । आदर्शेमुखवत्तेषां प्रतिबिंबंप्रकुर्वंति ॥
त्रिकोणादर्शाभिमुख मध्यतंत्र्यग्रसंस्थिते । बिंबाकर्षणनिर्यास लेपितेपटदर्पणे ॥
मणिस्थप्रतिबिंबाना माकारांश्च यथाक्रमम् । सप्रमाणम् सुविरळम् चित्रितंभवतिस्फुटम् ॥
पश्चाद्द्रावकसंस्काराच्चित्रं सुस्फुटम् भवेत् । महागोलाग्नियंत्रादीन् शत्रुभिस्सन्नि-
वेशितान् ॥१०७०॥
ज्ञात्वातेनततश्शीघ्रम् समूलम् नाशयेत्सुधीः । गुहागर्भादर्शयंत्रम् यानकुक्षावतोन्यसेत ॥
विमानसंरक्षणार्थायैतद्यंत्रम् निरूपितम् । गुहागर्भादर्शयंत्रमेवमुक्त्वातिसंग्रहात् ॥
तस्योपकरणान्यत्र यथाशास्त्रं निरूप्यते । तत्रादौ द्वासप्ततिम संख्याकादर्शउच्यते ॥
नाम्नासुरंजिकादर्श इतितस्यप्रकीर्त्यते ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

एडंमयूखंसुरुचिंपटोलंपारंकरंजंरविशर्करात्रयम् । सुटंकणंगंधकचारुशाल्मलीबिंडीर-
निर्यासकुरंगरौहिणी ॥
मंडूरपंचाननसैंहिकान्शिवंविश्वाभ्रकंशार्वणिजंविदूरकं । रुद्रोडुबाणार्कगजाब्धि-
विंशन्मुन्यब्धभूतानलतारकाभ्रका: ॥११७५॥
द्वात्रिंशतिस्त्रिंशतिरष्टत्रिंशतिर्वस्वर्कमूर्तिग्रहराशितःक्रमात् । संतोल्यवस्तून्तुलयायथाविधि-
संगृह्यभागांशकमानतःक्रमात् ॥
संपूर्यचंचूपुटमूषवक्त्रेवाराहकुंडेथनिधायचद्दढम् । धमेत्क्रमात्कक्ष्यशतोष्णवेगात्कूर्माख्य
भस्त्रेण निमीलनावधि ॥
संगाल्यसंगृह्यचतद्रसंपुनस्संपूरयेद्यंत्रमुखेशनैश्शनैः । एवंकृते शुभ्रमतीवसूक्ष्मम्
शताधिकव्यापकशक्तिसंयुतम् ॥
सुरंजिकादर्शमतीवशोभनम् भवेद्दृढम् यंत्रमुखात्स्वभावतः । तेनैवकुर्याद्वरदर्पणत्रयम्
यंत्रोपयुक्तं विधिवन्मनोहरम् ॥ इत्यादि ॥



॥ आंजिष्ठवृक्षनिर्णयः ॥

यंत्रक्रियोपयोगास्स्युः बहवोवृक्षजातयः । तथापितेष्वांजिष्ठाख्यवृक्षोत्यंनप्रशस्तकः ॥
इतिक्रियासारे ॥११९०॥
पंचशक्तिमया वृक्षास्सप्ताशीतिरितिस्मृताः । श्रेष्ठाच्छ्रेष्ठतमंप्राहुः तेष्वांजिष्ठम् मनीषिणः ॥
इत्युद्दिश्य तत्वसारायणे ॥
प्रतिबिंबाकर्षणादिशक्तयः पंचसर्वदा । यतोंजिष्ठावृक्षगर्भे प्रकाश्यंतेस्वभावतः ॥
ततस्सर्वेषुवृक्षेषु एतदंजिष्ठमेवहि । अत्यंतश्रेष्ठ मित्याहुरेतद्यंत्रक्रियाविधौ ॥ इत्यादि,
अगतत्त्वलहर्यां ॥

॥ अथ पंचधारालोहनिर्णयः ॥

शंकवोबहवस्संति नानायंत्रक्रियाविधौ । पंचधारालोहकृत शंकवस्तेषु शास्त्रतः ॥
गुहागर्भादर्शयंत्रदर्पणादिनिबंधने । सुप्रशस्ताइतिप्रोक्ता यंत्रशास्त्रविशारदैः ॥११९५॥

॥ तदुक्तं लोहतत्वप्रकरणे ॥

क्ष्विंकामाक्षिकिशुल्बकेंद्ररुरुकान्संशोधितान्शास्त्रतस्संगृह्याथमृगेंद्रमूषमुखतरसंपूर्यमंडोदरे ।
चंचूभस्त्रमुखाद्धमेत्रिशतकक्ष्योष्णप्रवेगात्क्रमात्संगाल्यापिचतद्रसंसमदळंकृत्वान्यसेद्यंत्रके ॥
धारापंचकसंयुक्तम् सुरुचिरंभास्वत्स्वरूपंदृढम् लोहंभारयुतम् वदंतिमुनयस्तम्
पंचधाराभिधम् ॥ इत्यादि ॥

॥ अथ पारग्रंधिकद्रावकनिर्णयः ॥

मणिसंस्थापनार्थाय तंत्रीमूलसमाकुलम् । कथ्यतेसंग्रहादत्रपारग्रंधिकद्रावकम् ॥

॥ तदुक्तं मूलिकार्कप्रकाशिकायां ॥

पारवैणविकम् चैवलंबोदरेमृतकुंडके । जटाग्रंधिंपार्वणिकम् स्वर्णबीजंघटोद्भजम् ॥
संमेळ्यविधिवच्छुद्धा नेतान्तुल्यप्रमाणतः । द्रवाकर्षणयंत्रेथ द्रावकंतुसमाहरेत् ॥१२००॥

तद्द्रावकंहेमवर्णं सुशुद्धंसुप्रभम् भवेत् । एतद्बिंबाकर्षणादिप्रयोगेषुयथाविधि ॥
उपयुक्तम् भवेत्तस्मात्पारग्रंधिकद्रावकम् । संपादयेद्विशेषेण प्रतिबिंबापकर्षणे ॥ इत्यादि॥

॥ अथ चुंबकमणिनिर्णयः ॥

उक्तेषु मणिवर्गेषु प्रतिबिंबापकर्षणे । शास्त्रज्ञैश्चुंबकमणिः श्रेष्ठम् इत्युच्यतेक्रमात् ॥

॥ तदुक्तं मणिप्रदीपिकायां ॥

चुंबुकशर्करटंकणदंत्यम् शौंडिकपारदपार्वणशुल्बम् । रंजिकमाक्षिकगृध्रिकसौरिं महिषखुरम् तद्विश्वकपालम् ॥
विधिवच्छुद्धीकृतसमभागान्कर्पटिमूषामुखमध्यबिले । संपूर्याक्षतव्यासटिकायां संस्थाप्योलूकिकभस्त्रमुखात् ॥१२०५॥
ध्मापयेत्कक्ष्यशतोष्णिकवेगात्संगाल्यरसम् वरयंत्रमुखे । संसिच्येद्यदि भवतिसुरूपम् चुंबुकमणिरत्यंतविशुद्धम् ॥ इत्यादि॥

॥ बिंबाकर्षण निर्यासनिर्णयः ॥

षष्ट्युत्तरत्रिशतनिर्यासवर्गेषुशास्त्रतः । रूपाकर्षणनिर्यासम् प्रतिबिंबापकर्षणे ॥
अत्यंतश्रेष्ठमित्याहुश्शास्त्रेषुज्ञानवित्तमाः । रूपाकर्षणनिर्यासमतस्संपादयेत्सुधीः ॥

॥ उक्तंहि निर्यासकल्पे ॥

ऐंद्वंक्रौंचम् वैणवंक्षीरपंचकमेवच । चुंबुकंचोडुसारंच माधिमात्वग्विशावरिं ॥
रथशौंडिद्रोणसारंपारसंबरमेवच । मुक्ताफलंचवल्मीकसारंसारस्वतंनखम् ॥१२०५॥
षोडशैतान्पदार्थानत्यंतशुद्धान्यथाविधि । समभागान्गृहीत्वाथमयूरांडरसेक्रमात् ॥
मासमेकम् मर्दयित्वा बिल्वतैले निवेशयेत् । निर्यासपाकयंत्रेथ तद्गोलम् स्थाप्यशास्त्रतः ॥
पाचयेदग्निनासम्यक्पाकावधेयथाक्रमम् । यावन्निर्यासतांयाति तावद्यामचतुष्टयम् ॥
संपाच्यविधिवत्पश्चान्निर्यासंसंग्रहेच्छनैः । रूपाकर्षणनिर्यासमितिप्राहुर्मनीषिणः ॥
बिंबाकर्षणनिर्यासमेतदेवेतिचापरे । अन्ये विरंजिनिर्यासमित्याहुः पंडितोत्तमाः ॥ इत्यादि ॥



॥ पटदर्पण निर्णयः ॥

रूपाकर्षणनिर्यासाद्यतश्शास्त्रविधानतः । प्रतिबिंबाकर्षणार्थं कुर्वंतिपटदर्पणम् ॥१२११॥
तस्माद्विचार्यशास्त्राणि पूर्वाचार्योक्तवर्त्मना । संग्रहेणप्रवक्ष्यामि निर्यासपटदर्पणम् ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

निर्यासकार्पासपटप्रतोळिकान्कुरंगमातंगवराटिकानपि । क्षोणीरेकंघोळिकचापशर्करान् परोटिकावार्ध्युषिकप्रियंगवान् ॥
झुंझोटिकाभीरुकरुक्मकेसरनिर्यासमृत्क्षारसुवर्चलोरुघान् । बैडारतैलंमुचुकुंदपिष्ठकंसिं जाणुरंजालिकदारुकार्मुकान् ॥
शताष्टपंचाशतिरष्टविंशतिर्वेदार्कबाणानलशैलत्रिंशतिः । दिक्तारवस्वर्कमुनित्रयोदश- द्वाविंशतिस्सप्तदशाष्टविंशतिः ॥१२१५॥
गुणावताराब्धिमुनित्रयोदशक्रमेणभागांशविधानतस्सुधीः । संशोध्यसम्यग्विधि- वत्पृथक्पृथक्संतोल्यचक्राननमूषिकांतरे ॥
संपूर्यविन्यस्यदृढंयथाक्रमात्वेगात्ध्मनेत्कक्ष्यशतोष्णमानतः । संगाल्यनेत्रांतमतःपरं- शनैर्यंत्रास्यमध्येविनियोजयेद्रसम् ॥
एवंकृतेसूक्ष्ममतीवशोभितंभवेद्दृढम् तत्पटदर्पणम् शुभम् । परोक्षवस्तुप्रतिबिंबसंग्रहेत्वे- तत्पटादर्शइतीरितोबुधैः ॥
यानकुक्षिमुखेत्वेतद्यंत्रंसंस्थापयेद्दृढम् । एतस्मात्संभवेद्यानत्राणनम् नात्रसंशयः ॥

॥ तमोयंत्र निर्णयः ॥

गुहागर्भादर्शयंत्र मेवमुक्त्वायथाविधि । अथेदानींप्रवक्ष्यामि तमोयंत्रस्यनिर्णयम् ॥१२२०॥

॥ उक्तंहि यंत्रसर्वस्वे ॥

रौहिणीविषसंबद्धचूर्णधूमादिभिस्तथा । क्रकचारिमणेर्दीपप्रभाविषसमूहतः ॥
विमाननाशनार्थायप्रयोगःक्रियते यदा । तदातद्विषनाशायस्वयानत्राणनायच ॥
शत्रुतंत्रम् सुविज्ञाय शास्त्रोक्तेनैव वर्त्मना । तमोयंत्रंस्थापयेद्विमानवायव्यकेंद्रके ॥ इत्यादि॥

॥ तदुक्तं क्रियासारे ॥

विषधूमप्रकाशादिप्रयोगाच्छत्रुणांयदा । विनाशोव्योमयानस्यसंभवेद्यदितत्क्षणात् ॥
संस्थापयेत्तमोयंत्रमतिवेगाद्विचक्षणः । यदिप्रमादंकुर्वीतस्वयानम् नाशमेधते ॥ इत्यादि ॥
द्वात्रिंशदुत्तरशततमोयंत्रेषु शास्त्रतः । द्विषष्टितमसंख्याक यंत्रएवगरीयसी ॥१२३६॥
विषधूमप्रकाशादिसंहारेसुप्रशस्तकः । इति प्रोच्यतेसम्यग्यंत्रशास्त्राविशारदैः ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

कृष्णसीसंचांजनिकंवज्रतुंडंसमांशतः । संयोज्यमत्स्यमूषायांकाकव्यासटिकांतरे ॥
विन्यस्यशतकक्ष्योष्ण वेगात्संगालयेत्ततः । तद्रसंयंत्रमध्यास्ये निषिंचेद्विधिवच्छनैः ॥
भवेत्तमोगर्भलोहस्सूक्ष्मश्शुद्धो लघुर्दृढः । एतल्लोहेनैवकार्यंतमोयंत्रम् न चान्यथा ॥१२४०॥
वितस्तित्रयमायामम् वितस्त्यर्धोन्नतंक्रमात् । चतुरश्रम् वर्तुलम् वा पीठम् कुर्याद्यथाविधि ॥
तन्मध्येस्थापयेच्छंकुम् तत्पुरोभागतस्तथा । निशाटद्रावकस्थानम् कल्पयित्वातथैवहि ॥
तमोद्रेकादर्शकेंद्रस्थानम् तत्पश्चिमेक्रमात् । रश्म्याकर्षणनाळस्यस्थानम् प्राच्यां प्रकल्पयेत् ॥
तदूर्ध्वेनाळसंधिस्थानम् प्रकल्प्यततःपरम् । तंत्रीसंधान चक्रस्यस्थानम् मध्यमकेंद्रके ॥
कीलीचालनचक्रस्यस्थानम् तद्दक्षिणेन्यसेत् । एवम् यंत्रस्यरचनाक्रममुक्त्वासमासतः ॥१२४५॥
तत्प्रयोगक्रमम् वक्ष्येसंग्रहेण यथामति । आदौसंचालयेत्कीलीं चक्राग्नेयस्थितांक्रमात् ॥
तेननाळस्थद्विमुखीदर्पणभ्रामणम् भवेत् । किरणाकर्षणम् भानोर्भवेन्नाळस्थदर्पणात् ॥
पश्चाद्वायव्यकेंद्रस्थकीलींसंचालयेद्दृढम् । निशाटद्रवपात्रस्थापनम् तस्माद्भवेत्स्वतः ॥
ईशान्यकेंद्रस्थकीलीं चालयेदतिसूक्ष्मतः । तेनतेजोपकर्षणमणिस्तंत्रीमुखात्स्वयम् ॥
निशाटद्रवपात्रस्य मध्येसंस्थापितम् भवेत् । तथापश्चिमकेंद्रस्थकीली संचालनाद्दृढम् ॥
स्वस्थानेस्थाप्यतेसम्यक्तमोद्रेकाख्यदर्पणः । मध्यकीलीचालनेन नाळमध्यस्थदर्पणात् ॥
आकृष्टास्सूर्यकिरणा मणिमावृत्यवेगतः । स्थास्यंतिमणिसंयोगात्सम्यक्चलनवर्जिताः ॥
भ्रामयेदतिवेगेन मूलकीलीमतःपरम् । ततोत्यंततमोद्रेकः प्रभवेन्नात्रसंशयः ॥
तेनादृश्यम् भवेद्व्योमयानंपश्चात्स्ववेगतः । विषधूमप्रकाशादीन्निश्शेषम् नाशयेत्क्रमात् ॥
ततस्तद्दर्शनादेवशत्रूणाम् बुद्धिविप्लवः । भवेन्मेदोविनाशंच तत्क्षणान्नात्रसंशयः ॥१२५५॥



तस्मात्सर्वप्रयत्नेन तमोयंत्रम् यथाविधि । विमानवायव्यकेंद्रे स्थापयेत्सुदृढंयथा ॥

॥ अथ पंचवातस्कंधनाळयंत्रः ॥

एवमुक्त्वातमोयंत्रम् संग्रहेणयथामति । पंचवातस्कंधनाळयंत्रमद्यप्रचक्षते ॥
वृष्ण्यादिवातावरण मंडलानित्रयोदश । पंक्तिराधसकेंद्रस्थ शक्तिसंपर्कतःक्रमात् ॥
परस्परम् स्वभावेन संलग्नानिभवंतिहि । तस्मान्मंडलमध्यस्थ वातयोरुभयोरपि ॥
परस्परंभवेद्युद्धं घर्षणाद्वैर्विशेषतः । तस्मात्तत्रप्रजायंतेत्यंतघोरविषात्मकाः ॥१२६०॥
शक्तयः पंचातिवेगात्शौष्णिकाद्यास्स्वभावतः । तत्संपर्काद्व्योमयानविनाशोभवतिक्रमात् ॥
तद्विज्ञायातिशीघ्रेणयानपश्चिमकेंद्रके । पंचवातस्कंधनाळयंत्रम् संस्थापयेत्सुधीः ॥
तस्माद्वौष्ण्यादयः पंचशक्तयस्तत्क्षणात्स्वतः । विनाशंयांत्यतः खेटयानसंरक्षणंभवेत् ॥
इतिखेटविलासे ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

पंचवातस्कंधनाळयंत्रस्यरचनाक्रमम् । यानसंरक्षणार्थाय कथ्यतेस्मिन्यथाविधि ॥
वाताहरणलोहेनयंत्रम् कुर्यान्नचान्यतः । प्रमादाद्यदिकुर्वीतप्रमादोभवतिध्रुवम् ॥१२६५॥

॥ उक्तंहि लोहसर्वस्वे ॥

सिंहास्यकंशारणसूर्यवर्चुलान्मयूखमूषामुखमध्यभागे । संपूर्यशुद्धान्समभागतःक्रमाज्जंबू-
मुखव्यासटिकांतरेदृढम् ॥
काकास्यभस्त्रादतिवेगतःक्रमाच्छतोष्णकक्ष्याद्वितयप्रमाणात् । संगाल्यनेत्रांतमतःपरं-
तद्यंत्रोर्ध्वनाळेसुदृढेयथाविधि ॥
शनैर्निंसिंचेद्यदिसुप्रकाशश्शुभ्रोतिसूक्ष्मस्सुदृढोमनोहरः । लघुर्मृदुश्शैत्यरसप्रसारको-
भवेत्सुवाताहरणाख्यलोहः ॥ इत्यादि ॥
वितस्तिद्वयमायामम् वितस्त्युन्नतमेवच । विस्तृतास्यंदृढंशुद्धमतिसूक्ष्मंमनोहरम् ॥
वाताहरणलोहेन कुर्यान्नाळचतुष्टयम् । विमानोर्ध्वमुखे तद्वत्पार्श्वयोरुभयोरपि ॥१२७०॥

अधोभागेचविवरान्वर्तुलान्परिकल्पयेत् । एकैकनाळमेकैक विवरेसन्नियोजयेत् ॥
वितस्तिद्वादशायामम् वर्तुलास्यंत्रिरुन्नतम् । कल्पयित्वानाळमेकम् पश्चाद्भागेतथैवहि ॥
ऊर्ध्वछिद्रमुखे सम्यक्स्थापयेद्विधिवत्क्रमात् । एवंक्रमेणसंस्थाप्यपंचनाळानतःपरम् ॥
पूर्वोक्तविषवातानां केंद्राभिमुखतःक्रमात् । भस्त्रास्यान्वर्तुलान्शुद्धान्सकीलान्बलवत्तरान् ॥
नाळानामेकैकमूले एकैकंसुदृढंयथा । आवर्तकीलकैस्सम्यक्स्थिरीकुर्याद्यथाविधि ॥१२७५॥
पश्चादेकैकभस्त्रास्यकीलकानतिवेगतः । चालयेदनुलोमेनयथाशास्त्रंपृथक्पृथक् ॥
भवेत्तस्मात्पंचविषशक्तीनामपकर्षणम् । भस्त्रिकास्यैः पंचनाळमुखेष्वत्यंतवेगतः ॥
प्रविश्याथबहिर्यांति पंचधाविषशक्तयः । पश्चाद्विनाशमायांति शौष्णिकाद्यास्स्वतःक्रमात् ॥
तस्मात्सर्वप्रयत्नेनयंत्रमेतद्यथाविधि । विमानेस्थापयेत्सम्यगितिशास्त्रविनिर्णयः ॥ इत्यादि ॥

॥ अथ रौद्रीदर्पणयंत्रनिर्णयः ॥

एवमुक्त्वापंचवातस्कंधनाळमतःपरम् । रौद्रीदर्पणयंत्रस्वरूपमद्यनिरूप्यते ॥१२८०॥

॥ तदुक्तं क्रियासारे ॥

ईषादंडस्यनैरृत्यकेंद्रमार्गैः विशेषतः । येसूर्यकिरणास्सम्यक्प्रसरंत्यतिवेगतः ॥
तेसर्वेऋतुभेदेन शक्त्यावर्तेपतंतिहि । तत्रत्य शक्तिसंयोगात्किरणेषुविशेषतः ॥
आविर्भवंतिवेगेनज्वालास्सर्वविदाहिकाः । तज्ज्वालासंधिकेंद्रेषुविमानस्संचरेद्यदि ॥
तत्क्षणादेवतद्वेगाद्भस्मीभवतिनान्यथा । अतस्तत्परिहाराय रौद्रीदर्पणयंत्रकम् ॥
या नस्याधःकेंद्रदेशेस्थापयेद्विधिवत्क्रमात् । तस्माद्विमानसंरक्षणम् भवेदितिविनिर्णयः ॥इत्यादि॥

॥ यंत्रसर्वस्वेपि ॥

वसंतग्रीष्मयोर्मध्यरेखाप्रांतेषुभूरिशः । आवृत्तशक्तिष्वंशूनां प्रवेशोभवितायदि ॥१२८६॥
तदासंजायते कोलाहलज्वालावळीस्स्वतः । आकाशपंचमेकक्ष्ये विमानस्संचरेद्यदि ॥
तत्रकोलाहलज्वालावेगाद्भस्मी कृतंभवेत् । तस्मात्तत्परिहाराय रौद्रीदर्पणयंत्रकम् ॥
विमाने स्थापयेत्तस्मात्तत्स्वरूपम् विविच्यते । यंत्रम् कोलाहलज्वाला विनाशार्थंयथाविधि ॥



कुर्याद्रौद्रीदर्पणेनैवेतिशास्त्रविनिर्णयः । अन्यथायदिकुर्वीतप्रमादस्स्यान्नसंशयः ॥१२९०॥

॥ रौद्रीदर्पणमुक्तं दर्पणप्रकरणे ॥

लोहास्वंचुंबुकवीरटंकणान्पंचाननंशून्यमयूरसज्जकान् । माध्वीकचंचूमुखसूर्यवर्चुला-
त्रुक्माळिकाशर्करपंचपादुकान् ॥
एतान्त्रिसंशोधितशुद्धवस्तून्संगृह्यसंतोल्यसमांशतःक्रमात् । पद्मास्यमूषामुखमध्यरंध्रे-
संपूर्यविश्वोदरकुंडमध्ये ॥
संस्थाप्यपश्चाद्द्विशतोष्णकक्ष्यप्रमाणतोभस्त्रमुखाद्यथाविधि । संगाल्यनेत्रांतमतःपरं-
शनैस्संगृह्यतद्यंत्रमुखांतराळे ॥
संपूरितंचेत्सुदृढंसुसूक्ष्मम् कृष्णंविशुद्धम् ज्वलनांतकंलघु । अंतःप्रकाशंविमलं-
मनोहरम् भवेत्सुरौद्रीदर्पणमद्भुतंहि ॥
एतद्रौद्रीदर्पणेन सुसूक्ष्मेणयथाविधि । वितस्तिषोडशायामम् पीठंकुर्यात्सुवर्तुलम् ॥१२९५॥
यावद्यानप्रमाणंस्यात्तावन्मात्रंयथाविधि । पंचविंशत्यंगुलप्रमाणगात्रंदृढंलघु ॥
कृत्वादंडंपीठमध्यकेंद्रेसंस्थापयेद्दृढम् । संकोचनप्रसारणकीलकद्वयमद्भुतम् ॥
अनुलोमविलोमाभ्याम् दंडाग्रेस्थापयेत्क्रमात् । तदधश्शलाकावरणचक्रंसंधारयेत्क्रमात् ॥
यथायानस्यावरकम् समग्रंस्यात्तथैवहि । शलाकद्वयमध्येपंचाशदंगुलमंतरम् ॥
कृत्वाशलाकाःपरितश्चक्रेसंधारयेत्क्रमात् । अकसीद्रोणसौरंभभंटिकातैलसंस्कृतम् ॥१३००॥
रौद्रीदर्पणसंसिद्ध पत्राण्यथपृथक्पृथक् । शलाकोपरिसंधार्य बध्नीयात्सूक्ष्मकीलकैः ॥
रौद्रीदर्पणसंसिद्धमणीन्पंचमुखान् तथा । संधारयेत्तैलशुद्धान् शलाकाग्रेपृथक्पृथक् ॥
तथैवपद्मपत्राकारपत्राणि यथाक्रमम् । शलाकद्वयमध्येष्टादशसंख्याप्रकारतः ॥
भ्रामणीकीलकैर्युक्तान्यथा शास्त्रंनियोजयेत् । छत्रीवद्वर्तुलाकारम् कुर्याद्यंत्रम् सुशोभनम् ॥
तत्पत्राण्यथदंडाग्रे बध्नीयात्कीलकाष्टकैः । विमानाभिमुखम् यावज्ज्वालाशक्तिर्भवेत्स्वतः ॥
तद्विज्ञायादर्शयंत्रसामग्र्याचैर्विचक्षणः । तावत्प्रसारणीकीलम् भ्रामयेदतिशीघ्रतः ॥१३०६॥
छत्रीवत्प्रभवेत्तेनयानस्यावरकंक्रमात् । आमूलाग्रम् स्वभावेनयुगपत्सर्वतोमुखम् ॥
पद्मपत्रैश्चमणिभिस्तथावरणपत्रकैः । पूर्वोक्तशक्तिर्निश्शेषम् तत्क्षणान्नाशमेधते ॥

पश्चात्संभ्रामयेत्संकोचनकीलीनिबंधनम् । तेनसंकुचितम् यानावरकम् तत्क्षणाद्भवेत् ॥
सुरक्षितम् भवेद्व्योमयानम पश्चात्स्वभावतः । तस्मादेतद्यंत्रमत्र संग्रहेणनिरूपितम् ॥
इत्यादि ॥१३१०॥

॥ अथ वातस्कंधनाळकीलकयंत्रः ॥

एवमुक्तवासंग्रहेण रौद्रीदर्पणयंत्रकम् । अथेदानीं वातस्कंधनाळयंत्रम् विविच्यते ॥

॥ तदुक्तं गतिनिर्णयाध्याये ॥

आवहादिमहावातमंडलेषुस्वभावतः । द्वाविंशदुत्तरशतप्रभेदेनयथाक्रमम् ॥
पवमानगतिश्चित्रविचित्रत्वेन वर्णिता । तेष्वेकोनाशीतितमगतिर्वातायनाभिधा ॥
तद्गतिस्स्याद्विशेषेण वायोर्ग्रीष्मऋतौक्रमात् । चतुर्थकक्ष्यगगनेयानस्संचरनेयदा ॥
तदावातायनगतिवेगाद्वायोर्विशेषतः । विमानस्यभवेद्वक्रगतिस्तस्मात्परस्परम् ॥१३१५॥
यंतॄणांप्रभवेत्कष्टमत्यंतदुस्सहंक्रमात् । अतस्तत्परिहारायया नाधःपार्श्वकेंद्रके ॥
वातस्कन्धनाळकीलकयंत्रं स्थापयेत्सुधीः । तेनापायनिवृत्तिस्स्याद्यंतॄणांसुखदंभवेत् ॥इत्यादि॥

॥ उक्तंहि यंत्रसर्वस्वे ॥

विमानवक्रगमनपरिहारायकेवलम् । वातस्कंधनाळकीलयंत्रमद्यप्रचक्ष्यते ॥
वातस्तंभनलोहेनैतद्यंत्रंप्रकल्पयेत् । अन्यथानिष्फलमितिप्रवदंतिमनीषिणः ॥

॥ तदुक्तं लोहतत्वप्रकरणे ॥

विशावरंसुवर्चलम् मयूरलोहपंचकम् । भृसुंडिकम् सुरंजिकंवराहकांघ्रिलोहकम् ॥१३२०॥
विरोहिणंकुभेरकम् मुरारिकांघ्रिरंजिकम् समम् । सुहंसनेत्रकंदळम वराळिकम् मृनाळिकम् ॥
सुशोधितान्यथाविधिप्रतोलितान्समम् । मत्स्यमूषमध्यमास्यपूरितान्समग्रकम् ॥
स्थाप्यमाविमाख्यकुंडमध्यमेदृढम् यथा । त्रिजृंभणाख्यभस्त्रिकामुखेनसंधमेत्क्रमात् ॥
विगाल्यचाथतद्रसम् सुयंत्रमध्यनाळके । तदुष्णतः प्रपूरयेच्छनैश्शनैर्यथाक्रमम् ॥
एवंकृतेतिसूक्ष्मरूपकम् विशुद्धमच्युतम् । सुवातस्तंभलोहकम् भवेत्सुवर्चसंलघु ॥ इत्यादि ॥
वितस्तीनां पंचदशप्रमाणेनसुवर्तुलम् । नाळषट्कम् विस्तृतास्यमादौकृत्वा यथाविधि ॥



अंतश्छिद्रंप्रमाणेन वितस्तीनांदशस्मृतम् । विमानमूलमध्याग्रप्रदेशेषु यथाक्रमम् ॥१३२७॥
पूर्वपश्चिमतश्चैवदक्षिणोत्तरतस्तथा । संधारयेल्लोहकृतपट्टिकान्भारवर्जितान् ॥
पूर्वोक्तनाळान्संगृह्य पट्टिकासुयथाक्रमम । नाळास्यानामाभिमुख्यम् चतुर्दिक्षुयथाभवेत् ॥
तथासंधारयित्वाथबध्नीयात्कीलकादिभिः । पश्चादेकैकनाळास्ये वातपामणिमुत्तमम् ॥१३३०॥
एकैकम् योजयेत्तंत्रीमूलकात्सुदृढंयथा । वातायनी वातवेगापकर्षणपटूंस्ततः ॥
पताकान्त्रोळिकपटनिर्मितान्नाळसंधिषु । संधारयेत्सूत्रबद्धान्पंचसंस्कारसंस्कृतान् ॥
वातस्तंभलोहकृतचक्रांस्तत्तत्ध्वजाग्रतः । एकैकंस्थापयेत्पश्चात्तंत्रींसर्वत्रयोजयेत् ॥
वातायनीवातवेगप्रवाहोत्यंतवेगतः । पताकाभिमुखोभूत्वाव्याप्यते सर्वतःक्रमात् ॥
तद्वेगमपहत्याथपताकाशब्दपूर्वकम् । प्रचलंत्यतिवेगेनसर्वतोमुखतःक्रमात् ॥१३३५॥
पश्चात्तन्मूलकीलस्थ चक्राण्यपि यथाक्रमम । अतिवेगेनभ्राम्यंति तद्वेगान्मणयस्तथा ॥
वातायनीवातवेगम पताकाः प्रथमंक्रमात् । समाहरंतिवेगेन पश्चाच्चक्राणिवेगतः ॥
समाहृत्यप्रेषयंति मणीन्प्रतिविशेषतः । मणयस्तंसमाकृष्य नाळास्ये योजयंतिहि ॥
तन्नाळांतश्छिद्रमुखादागत्यान्यमुखांतरात् । बाह्याकाशेथविलयम् यातिनास्त्यत्रसंशयः ॥
पश्चादृजुगतिस्तेनविमानस्यभवेत्क्रमात् । तथैवयंतॄणांदुःखम् निर्मूलम् नाशमेधते ॥१३४०॥
अतोवातस्कन्धनाळकीलयंत्रम् यथाविधि । विमानेस्थापयेत्सम्यगितिशास्त्रविनिर्णयः ॥

॥ अथ विद्युद्दर्पणयंत्रः ॥

एवंवातस्कन्धनाळ कीलयंत्रम् निरूप्यच । विद्युद्दर्पणयंत्रोत्र संग्रहेणनिरूप्यते ॥

॥ उक्तंहि सौदामनीकलायां ॥

तटित्संचलनम् वर्षऋतौमेघेषु पंचधा । वारुण्यग्निमुखौदंडमहारावणिका इति ॥
तेषु वारुण्यग्निमुखविद्युतावतिवेगतः । मुहुर्मुहुःप्रचलतस्स्वतोमेघेतुवार्षिके ॥
पश्चाद्यानस्थरौद्र्यादिदर्पणैस्तावुभावपि । आकृष्येतेस्वभावेनपश्चात्संमेळनंतयोः ॥१३४५॥
परस्परम् भवेत्तस्मान्महानग्निः प्रजायते । तेनदग्धीभवेद्व्योमयानस्तत्क्षणतःक्रमात् ॥
अतस्तत्परिहारार्थं मुखदक्षिणकेंद्रयोः । विमानेस्थापयेद्विद्युद्यंत्रंसम्यग्यथाविधि ॥इत्यादि॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

वारुण्यग्नितटिज्जातवह्निवेगोपशांतये । विद्युद्दर्पणयंत्रोत्रसंग्रहेणनिरूप्यते ॥

॥ विद्युद्दर्पणमुक्तं दर्पणप्रकरणे ॥

कुरंगपंचास्यविरंचिशोणजान्सुशर्करास्फाटिककुट्भनीरगान् । सुंडालिकापारदक्षारटंकणान् बिडौजपिंगाक्षवराटिकर्बुरान् ॥
दिक्शैलवेदानलशशिनेत्रमुन्यब्धरुद्रोडुमनुर्मुनिस्तथा । द्वाविंशदष्टादशबाणरुद्रक्रमेण-भागान्विधिवद्विशोधितान् ॥१३५०॥
संगृह्यसंतोल्यपृथक्पृथक्क्रमात्संपूर्यपञ्चास्यकमूषमध्ये । विश्वोदरव्यासटिकांतरेदृढम् विन्यस्यपंचाननभस्त्रिकामुखात् ॥
संगालयेत्पंच शतोष्णकक्ष्यतःपश्चात्समाहृत्यचयंत्रमध्ये । संपूरयेच्छास्त्रविधानतःक्रमादेवंकृते शुद्धमतीवतीव्रं ॥
विद्युद्वयोद्भूतकृशानुवेगोपशांतकंशक्तिशतत्रयान्वितम् । विद्युत्प्रभापूरितमध्यदेशंनाना-विचित्रांशुमुखंदृढंगुरु ॥
स्वशक्तितोयोजनपंचकंक्रमात्क्षणद्वयाद्व्यापकमद्भुतंशिवम् । भवेत्तटिद्दर्पणकंसमस्त-प्रकाशकम् भासुरभानुभास्वरम् ॥इत्यादि॥
तटिद्दर्पणतः कार्यमेतद्यंत्रम् यथाविधि । अन्यथा यदिकुर्वीत विनाशोभवतिध्रुवम् ॥१३५५॥
वितस्तित्रिंशत्सायामम् वितस्त्यैकोन्नतंतथा । चतुरश्रम् वर्तुलंवा पीठंकुर्याद्यथाविधि ॥
पूर्वपश्चिमतश्चैव दक्षिणोत्तरतस्तथा । अर्धचंद्राकृतीन्नाळान् चतुरोमुकुरैःकृतान् ॥
पीठेसंस्थापयेत्पश्चात्तन्मध्ये चुंबुकात्कृतम् । तंत्रीमयम् पंचमुखंपंजरम् स्थापयेद्दृढम् ॥
एकैकमुखकेंद्रेथ शक्तिकीलान्प्रकल्पयेत् । एकैककीलकस्थाने विद्युद्दर्पणनिर्मितान् ॥
स्थापयेच्छत्रकाकारान्तन्मध्ये गोपुराकृतिम्। सतारम् नळिकायुक्तमष्टास्यम् दशकोणकम्॥
कृतम् विद्युद्दर्पणेन स्थापयेत्सुदृढंयथा । अंतःकीलीचालनेन गोपुरम् भ्राम्यतिस्वयम् ॥
तद्वेगो विद्युदुत्पन्नवह्निवेगंसमग्रतः । समाकृष्यातिवेगेनस्वयंपिबतितत्क्षणात् ॥
पश्चान्मार्तंडकिरण शक्त्यःस्वीयतेजसा । तच्छक्तिंचसमाहृत्यगोपुरस्थां सुदारुणां ॥



महामांडलिकाख्येवातमंडलेंबरांतरे । तत्क्षणात्प्रविलाप्यंतितद्विनाशोभवेत्ततः ॥
पश्चाद्धिमवदत्यंतम् शीतळंप्रभवेत्क्रमात् । तेनयानस्थयंतॄणां भवेदाप्यायनंततः ॥१३६५॥
सुरक्षितंभवेद्व्योमयानंचापिविशेषतः । तस्मात्संस्थापयेद्व्योमयानेशास्त्रविधानतः ॥
एतद्विद्युद्दर्पणाख्ययंत्रमद्भुतमव्ययम् । नोचेद्विमाननाशःस्यात् अप्रमादीभवेदतः ॥

॥ अथ शब्दमुखकेंद्रयंत्रः ॥

एवमुक्त्वासंग्रहेण विद्युद्दर्पणयंत्रकम् । अथेदानींशब्दकेंद्रमुखयंत्रंप्रचक्षते ॥

॥ तदुक्तं क्रियासारे ॥

शब्दोत्पत्तिस्थानभेदाश्शब्दकेंद्राइतीरिताः । तेभ्यःप्रसारणम् यत्स्यात्शब्दानां दिक्प्रभेदतः ॥
तदेवतच्छब्दकेंद्रमुखस्थानमितीर्यते । तत्रत्यशब्दोपसंहारार्थंतस्मिन्प्रतिष्ठितम् ॥१३७०॥
यंत्रंयत्तच्छब्दकेंद्रमुखयंत्रमितीर्यते । चतुरुत्तरत्रिशतशब्दप्रभेदेषुयथाक्रमम् ॥
वारुणीवाताशनीनां शब्दास्तीव्रतराःस्मृताः । अकाशस्याष्टमेकक्ष्ये ह्येतच्छब्दयंतक्रमात् ॥
एकीभूयस्वभावेन माघफाल्गुणमासयोः । भवेन्महाघनरवस्तीक्ष्णः श्रोत्रविदारकः ॥
तस्यश्रवणमात्रेणबाधिर्यं यंतॄणां भवेत् । अतस्तत्परिहाराय शब्दकेंद्रमुखाभिधम् ॥
यंत्रंसंस्थापयेद्यानवामभागेयथाविधि ॥ इत्यादि ॥

॥ महाघनरवउक्तः शब्दनिबंधने ॥

बिंदुवाताग्नयंबराणां शक्तिसंमेळनक्रमात् । शब्दोत्पत्तिर्भवेल्लोकेस्थावरेजंगमेपिच ॥१३७५॥
शकारश्चबवर्णश्चदकारोथविसर्गकः । बिंदुवाताग्नयंबराणांक्रमात्सांकेतिकास्स्मृताः ॥

॥ तदुक्तं नामार्थतल्पे ॥ अध्याय १ सूत्र १४

सूत्र ॥ अथ शब्दस्वरूपम् व्याख्यास्यामः शब्दविसर्गाणांसम्मेळनाच्छब्द इत्याचक्ष्यते । तत्रशकारो बिंदुर्बकारोवह्निः दकारोवायुर्विसर्गश्चाकाश इतिनिर्णीताभवंतिस्थावरे जंगमेवैतेषां यथाभागम् यत्रयत्रशक्तयस्सम्मीळिता भवंति तत्रतत्र चतुरुत्तरत्रिशत शब्दभेदाः प्रभवंतीति ॥

"चतुरुतुरत्रिशतशब्दाः" इतिहि ब्राह्मणम् ॥ इत्यादि ॥

स्फोटोरवोत्यंतसूक्ष्मोसूक्ष्मोमंदोतिमंदकः । अतितीव्रो तीव्रतरो मध्यमश्चातिमध्यमः ॥
महारवोघनरवो महाघनरवस्तथेत्यादि ॥

॥ यंत्रसर्वस्वेपि ॥

वारुणीवाताशनीनां शब्दसंमेळनात्स्वतः । आकाशाष्टमपरिधि केंद्रेत्यंतभयावहः ॥
भवेन्महाघनरवः श्रोत्रेंद्रियविदारकः । तस्मिन्विमानप्रवेशोयदिस्याद्यानयंतृणां ॥
तत्स्यश्रवणमात्रेण बाधिर्यं भवतिक्रमात् । क्षणमात्रेणबाधिर्यंभवेत्तच्छब्दवेगतः ॥१३८०॥
तस्मात्तत्परिहाराय शब्दकेंद्रमुखाभिधम् । संग्रहेणप्रवक्ष्यामि यंत्रमत्रयथामति ॥
आकाशाष्टमपरिधिमंडलस्ययथाक्रमम् । केंद्रास्सप्तोत्तरेशता इतिशास्त्रैर्विनिश्चिताः ॥
तेषुसप्ततिमात्केंद्रात्समायात्यतिभीषणः । वारुणीशक्तिसंभूत शब्दोवेगाद्विशेषतः ॥
तथैववातसंभूतशब्दश्चागच्छतिक्रमात । द्वादशोत्तरत्रिशतकेंद्रस्थानाद्यथाक्रमम् ॥
तथैवाशनिशब्दश्चद्व्यशीतितमकेंद्रतः । समायातितततस्तेषां मेळनंस्यात्परस्परम् ॥१३८५॥
महाघनरवस्तेनजायतेत्यंतदारुणः । व्योमयानप्रयातॄणां महत्कष्टंभवेदतः ॥
एकैकशब्दकेंद्रादिमुखतस्सुदृढंयथा । शब्दोपसंहारयन्त्रंस्थापयेच्छास्त्रतःक्रमात् ॥

॥ अथ यंत्रोपस्करणानि ॥

गव्यारिकम् पंचनखचर्मसंशोधितम् तथा । जंबालम् शणकोशंचक्रौंचिकम् वारिपिष्टकम् ॥
रुंठाकमामिठंशुंडवंगंचेतिदशक्रमात् । संगृह्येतान्यथाशास्त्रमादौशुद्धिंप्रकल्प्यच ॥
कपिचर्मविनासर्ववस्तून्निर्यासयंत्रके । संपूर्यमाहिषीपिष्ठयात्पाचयेत्त्रिदिनंक्रमात् ॥१३९०॥
समत्वेनैत्रवस्तूनां मेळनंसन्निरूपितम् । पश्चात्संगृह्यनिर्यासम् रक्तवर्णंसुशोभनम् ॥
संलेपयेत्पंचनखचर्मणःसप्तधासुधीः । कृत्वासूर्यपुटम् पश्चाद्धुंडिकंदरसात्तथा ॥
शब्दोपसंहारशक्तिरेततसंस्कारतःक्रमात् । स्वतस्संजायते सम्यक्कपिचर्मण्यथाबलम् ॥
वितस्तिद्वयमायामम् वितस्त्यैकोन्नतिंतथा । बधिराख्येन लोहेन पेटिकांकारयेद्दृढम् ॥
तन्मध्ये बधिरलोहनाळद्वयमतःपरम् । बकास्यम् स्थापयेत्पश्चात्तदूर्ध्वंशास्त्रतः क्रमात् ॥
शब्दपादर्पण कृतछत्रिंसंधारयेत्ततः । तन्मणिंच सुसंस्कृत्यतुलसीबीजतैलतः ॥
कपिचर्मणिसंधार्य बल्ब्याकात्सन्नियोजयेत् । बल्ब्याकोनाम खड्गमृगशृंगकृतनिर्यासः ॥



पेटिकामध्यकेंद्रस्थदक्षनाळांतरे दृढम् । पूर्वोक्तचर्मसहितमणिंसंधारयेत्तथा ॥
वामनाळे पंचनखचर्ममात्रंनियोजयेत् । सूक्ष्मतंत्रीन्मुसंयोज्यपरस्परमतः परम् ॥१३९९॥
बध्नीयात्सर्वतः पश्चात्सूक्ष्मकीलकशंकुभिः । पेटिकावरणादूर्ध्वं सिंहास्याकारतःक्रमात् ॥
कृत्वा तच्चर्मणातस्यमूलनाळांतरेततः । छिद्रंकृत्वातिसूक्ष्मेण तंत्रीनाळाद्यथाविधि ॥
पेटिकांतरनाळस्थमणौसंयोजयेद्दृढम् । पेटिकस्योर्ध्वावरणभागमाच्छाद्यबंधयेत् ॥

॥ विद्युद्द्वादशकयंत्रः ॥

एवमुक्त्वा शब्दकेंद्र मुखयंत्रम् यथाविधि । विद्युद्द्वादशकयंत्रमिदानींसंप्रचक्षते ॥

॥ तदुक्तं क्रियासारे ॥

बाणस्थधूमकेतूनां मंडलस्याष्टमेंतरे । त्रिकोटिसप्तलक्षत्रिसहस्रद्विशतोपरि ॥
एकविंशतिसंख्याकावर्तंते धूमकेतवः । विद्युद्गर्भास्तेषु धूमकेतवोष्टसहस्रकाः ॥१४०५॥
महाकालादयोरौद्रा विद्युद्द्वादशलोचनाः । तेषुद्वादशसंख्याकाःप्रशस्ताधूमकेतवः ॥

॥ विद्युद्द्वादशकमुक्तं शक्तितंत्रे ॥

रोचिषोदाहकासिंही पतंग।कालनेमिका । लताबृंदारटाचंडी महोर्मीपार्वणीमृडा ॥
उल्कानेत्रस्थिताह्येते विद्युतोद्वादशक्रमात् ॥ इति ॥

॥ धूमकेतवउक्ताः खेटसर्वस्वे ॥

महाकालो महाग्रासो महाज्वालामुखस्तथा । विस्फुलिंगमुखोदीर्घवातो खंजोमहोर्मिकः ॥
स्फुलिंगवमनोगंडो दीर्घजिह्वो दुरोणकः । सर्पास्यश्चेति विद्युन्नेत्रोल्काद्वादशधारमृताः ॥
इत्यादि ॥

तेषां दिद्युत्समूहास्तु शरद्वासंतयोःक्रमात् । भवंत्यादित्य किरणेष्वंतर्भूतास्स्वभावतः ॥
किरणोल्कस्थशक्तीनां परस्परविमेळनात् । भवेदजिगरानाम काचिच्छक्तिर्भयंकरा ॥१४११॥
खस्थद्वाविंशतिमकेंद्रमुखमध्ये यथाक्रमात् । व्योमयानस्समायाति तदाजिगरसंज्ञिका ॥
शक्तिर्यानस्तंभनंस्ववेगात्तत्रकरोतिहि । तस्मात्तत्परिहाराय विद्युद्द्वादशयंत्रकम् ॥

विमानस्येशान्यकेंद्रे विधिवत्स्थापयेदृढम् ॥ इत्यादि ॥

॥ यंत्रसर्वस्वेपि ॥

उल्कानेत्रस्थविद्युद्द्वादशशक्त्युपसंहृतौ । विद्युद्द्वादशकंनाम यंत्रमेवगरीयसी ॥१४१५॥
तस्मात्तत्संग्रहेणात्र यथाविधिनिरूप्यते । आदौकुर्यात्पटघनम् विद्युत्संहारकारकम ॥
विमानावरकम् द्वादशास्यम् तेनप्रकल्पयेत् । पौंड्रकादिमणीन्तस्यप्रत्यास्येसन्निवेशयेत ॥
महोर्णद्रावकंव्योमयानस्येशान्यके ततः । विमानावरणांतर्गुहाशयेस्थापयेत्सुधीः ॥
विद्युद्वेगो संहारदर्पणेन यथाविधि । शलाकान्षड्बाहुमात्रान् अष्टौकुर्याद्दृढम् यथा ॥
अष्टदिक्षुस्थापयेत्तद्विमानावरकोपरि । विधिवत्स्थापयेत्पश्चाद्दंभोळीलोहनिर्मितान् ॥१४२०॥
कीलीचक्रान्पंचमुखानन्योन्याश्रय संयुतान् । विमानावरकस्यादौ मध्येचांते यथाक्रमम् ॥
बध्नीयादावर्तसूक्ष्मशंकुभिस्सुदृढंयथा । पौंड्रकादिमणीनांतु पंजरंसूक्ष्मतंत्रिभिः ॥
पृथक्पृथक्कल्पयित्वा तंत्र्यग्राणियथाक्रमम । एकैककीलीमूलाग्रे सम्यक्संधारयेत्क्रमात् ॥
भवेत्पंजरतंत्रीणां चतुर्णामेककीलकः । पश्चात्संभ्रामयेन्मूलकीलींवेगाद्यथाविधि ॥
पंजरैस्सहभ्राम्यंतिमणयो द्वादशक्रमात् । तेनावरणकोशानां विकासोभवतिध्रुवम् ॥१४२५॥
तेभ्यःपटघनांतरस्थविद्युद्वेगापहारिणी । शक्तिर्विजृंभतेसम्यक्प्रतिकोशे विशेषतः ॥
पूर्वोक्तविद्युत्किरणसंजाताजिगराभिधां । शक्तिंतन्मणयःपश्चात्समाकृष्यातपांतरात् ॥
किरणेभ्यः पृथक्कृत्वा तद्वेगंसन्निरुध्यच । तत्रत्याष्टशलाकेषुयोजयंतिस्वशक्तितः ॥
परिगृह्यशलाकास्तच्छक्तिं पश्चात्स्वतेजसा । पूर्वोक्तावरणांतस्थप्रतिकोशमुखांतरे ॥
संयोजयंतिवेगेन तत्कोशात्तदनंतरम् । तच्छक्तिंप्रेषयेद्वेगात्द्रावकाभिमुखम् यथा ॥
ततस्संचालयेन्मध्यकीलीमावरणस्थितां । विमानावरणांतस्थद्रवात्तेनातिवेगतः ॥१४३१॥
विद्युत्कुठारिकानाम शक्तिरूर्ध्वमुखीस्वतः । समुत्थायस्वभावेनकोशस्थाजिगराभिधां ॥
समाहृत्यस्वशक्त्याथ द्रावणेसन्निरुध्यति । पश्चादावरणांतस्थांत्यकीलीप्रचालनात् ॥
द्रवस्थाजिगराशक्तिः स्वयम् पटघनांतरे । भवेद्विलीनंसर्वत्र ततोवायुःस्ववेगतः ॥
तत्रस्थाजिगराशक्तिं समाहृत्यपिबेत्क्रमात् । तस्मात्तत्क्षणतोव्योमयानबंधविमोचनम् ॥
भवेत्ततोविमानस्थ यंतॄणांसुखदंभवेत् ॥



॥ विद्युद्वेगोपसंहारदर्पणमुक्तं दर्पणप्रकरणे ॥

शुंडालकमृडकांतक संघनोदरसत्त्वान् । बुडिलाकर विषपंकज कुटिलोरगनागान् ॥
सिकतावरगरेदाघनगरळामुखश्रृंगान् । स्फटिकावरमुक्ताफलवरकांतकुरंजान् ॥
क्षारत्रय रवि कंचुक चुळकोडुपवंध्यान् । गरुडारि भुजंबालिक कुशकुट्मलरुक्मान् ॥
शुद्धान्वरषड्विंशतिवस्तून्परिगृह्य । संपूर्य विराजाननमूषामुखमध्ये ॥१४४०॥
पद्माकरकुंडांतरमध्येवरमूषां । संस्थाप्यमृगेंद्राकृतिभस्त्रामुखरंध्रैः ॥
अतिवेगात्संगाल्योष्णकक्ष्यत्रिशतांशात् । यंत्रास्येथ निषिचेद्रसमाहृत्यविधानात् ॥
अतिमृदुळंसुदृढंस्फाटिकवच्छुद्धतरंच । तद्विद्युद्वेगहरम् वरमुकुरंप्रभवेद्धि ॥इत्यादि॥

॥ दंभोळिलोहमुक्तं लोहतंत्रप्रकरणे ॥

उर्वारिकंकारविकंकुरंगम् शुंडालिकम् चंद्रमुखम् विरिंचम् । क्रांतोदरम् याळिकसिंहवक्त्रौ-
ज्योत्स्नाकरंक्ष्विकिकपंचमौर्त्विकौ ॥
एतान्समाहृत्यविशुद्धलोहान्संतोल्यपश्चात्समभागतःक्रमात् । मंडूकमूषोदरमध्यमास्ये
संपूर्यचंचूमुखकुंडमध्ये ॥१४४५॥
संस्थाप्यपंचाननभस्त्रिकामुखात्संगालयेत्पंचशतोष्णकक्ष्यतः । दंभोळिलोहंप्रभवेद्विशुद्धं-
एवंकृते शास्त्रविधानतःक्रमात् ॥ इत्यादि ॥

॥ पौंड्रिकादयो मणिप्रकरणेनिरूपिताः ॥

पौंड्रिकोजृंभकश्चैव शिबिरश्चापलोचनः । चपलश्चांशुपमणि वीरघोगजतुंडिकः ॥
तारामुखोमांडलिको पंचास्योऽमृतसेचकः । एतेद्वादशसंख्याका मणयोजिगरांतकाः ॥इत्यादि॥

॥ महोर्णद्रवमुक्तं द्रावकप्रकरणे ॥

पैनाशकंपंचमुखम् प्राणक्षारत्रयम् तथा । गुंजादळम् माक्षिकंच कुडुपवज्रकंदकम् ॥
बुडिलंपारदंकांतम् इंगालाम्लम् शिवारिकम् । समभागेनसंगृह्य शुद्धिंकृत्वायथाविधि ॥
द्रवाहरणयंत्रास्ये संपूर्यद्रावकंहरेत् । एतन्महोर्णद्रवमित्युच्यते शास्त्रवित्तमैः ॥ इत्यादि ॥

॥ अथ प्राणकुंडलिनीयंत्रनिर्णयः ॥

॥ तदुक्तं खेटसंग्रहे ॥

धूमविद्युद्वातमार्गसंधिर्यद्व्योमयानके । तत्प्राणकुंडलीस्थानमित्याहुश्शास्त्रवित्तमाः ॥
एतच्छक्तित्रयाणांतु तत्तन्मार्गानुसारतः । नियामनस्तंभनचालनसंयोजनादिषु ॥
नियामकार्थं विधिवत्तत्रयत्स्थाप्यतेबुधैः । तत्प्राणकुंडलीनामयंत्रमित्यभिधीयते ॥ इत्यादि ॥

॥ क्रियासारेपि ॥

क्रमाद्विद्युद्वातधूम शक्तीनांसप्रमाणतः । तत्तत्कालानुसारेण चोदनादिक्रियादिषु ॥१४५५॥
नियामकार्थंतद्यानप्राणकुंडलिकेंद्रके । मूलस्थानेस्थाप्यतेयद्यंत्रश्शास्त्रविशारदैः ॥
प्राणकुंडलिनीयंत्रमितितत्संप्रचक्षते ॥

॥ यंत्रसर्वस्वे ॥

विमानेधूमविद्युद्वातशक्तीनांयथाविधि । प्रसारणेचालनेच चोदनेस्तंभनेपिच ॥
विचित्रगमने तद्वत्तिर्यग्गमनकर्मणि । नियम्यसप्रमाणेनतत्तन्नाळमुखांतरात् ॥
प्रेरणार्थं संग्रहेणयथाशास्त्रं यथामति । प्राणकुंडलिनीयंत्रम् शास्त्रेस्मिन्संप्रकीर्त्यते ॥१४६०॥
चतुरश्रंवर्तुलंवा केंद्राष्टकविराजितम् । वितस्तित्रयमायामम् वितस्तित्रयमुन्नतम् ॥
कुर्याद्वृषललोहेन पीठमादौयथाविधि । एकैककेंद्रस्थानेथ चक्रद्वयविराजितम् ॥
प्रदक्षिणावर्तकीलस्थापनार्थंयथाविधि । रंध्रत्रयसमायुक्तान् चतुर्दंतैर्विराजितान् ॥
शंकुत्रयसमाविष्टान् सूक्ष्मपीठान् दृढंयथा । संधारयेत्ततस्तेषांमध्येशंकुमपिक्रमात् ॥
उक्तविद्युद्धूमवातपथनाळमुखावधि । प्रकाशनतिरोधानहस्तचक्रैर्विराजितम् ॥१४६५॥
सव्यापसव्यचलनकीलकद्वयशोभितम् । सांकेतार्थंचतन्मध्ये शब्दनाळेनसंयुतम् ॥
पक्षावातकचक्राद्यैस्सकीलैस्सशलाककैः । संशोभितम् रक्तवर्णं नाळत्रयमतःपरम् ॥
पीठस्थशंकुनःपूर्वे ईशान्याग्नेयकेंद्रतः । तथैवपश्चिमदिशिमध्यकेंद्राद्यथाक्रमम् ॥
यानकुंडलिनीमध्यमार्गस्थानावधिक्रमात् । संधार्यावृत्तादिकीलशंकुभिस्सुदृढंयथा ॥
संस्थाप्यविधिवत्केंद्रत्रयमूलावधिदृढम् । चालनादिक्रियास्सर्वे हस्तचक्रैर्यथाक्रमम् ॥१४७०॥



तत्तत्कीलीचालनेन तत्तन्नाळमुखांतरात् । भवेत्तेनव्योमयानसंचारःप्रभवेत्ततः ॥
उक्तकेंद्राष्टकस्थानमध्यपीठाद्यथाविधि । एकैकनाळतंत्रींसंरध्रां दृढतरांक्रमात् ॥
संधार्यशंकुनः पूर्वकेंद्रपीठांतरादितः । पूर्वोक्तनाळत्रयोर्ध्वभागे वातायनांतरे ॥
संधारयेत्तदग्राणि कीलकैस्सुदृढंयथा । यानसंचारोपयोगम् कृत्वाशक्तित्रयम् ततः ॥
शक्तित्रयावशिष्टांशम् समग्रमतिवेगतः । उक्ताष्टनाळरंध्रेषु योजयेत्कीलचालनात् ॥१४७५॥
ततश्शक्तित्रयंगत्वा आकाशेपततिस्वयम् । पश्चाद्वातप्रवाहेणमिळित्वानाशमेधते ॥
तस्माद्विमानसंचारोह्यनायासेन सिद्ध्यति ॥ इत्यादि ॥

॥ अथ शक्त्युद्गमयंत्रनिर्णयः ॥

एवमुक्त्वा प्राणकुंडलिनीयंत्रमतः परम् । अद्य शक्त्युद्गमयंत्रसंग्रहेण निरूप्यते ॥

॥ उक्तंहि खेटविलासे ॥

ग्रहभानामष्टशक्तीर्महावारुणी शक्तितः । आकृष्यंतेपूर्णिमायां कार्तिकेमासिवेगतः ॥
आकाशकक्ष्यपरिधिकेंद्रेष्वथयथाक्रमम् । सप्तत्रिंशोत्तरशतकेंद्ररेखापथेक्रमात ॥१४८०॥
जलपिंजूलिकाशक्त्याकर्षणादतिवेगतः । तच्छक्तयोष्टौसर्वत्रव्याप्नुवंतिविशेषतः ॥
अन्योन्यशक्तिसंसर्गाद्विमोद्रेको भयंकरः । भवेत्पश्चात्त्रिधातद्विभागःस्याच्छक्तिभेदतः ॥
तेष्वेकांशोशीतरस रूपवातोभवेत्ततः । अपरोजलशीतस्यसीकराकारमेधते ॥
अन्योभवेद्वातशीतरसप्रावाहिकःक्रमात् । यदायानस्समायातिकेंद्ररेखापथेक्रमात ॥
वातशीतरसप्रावाहिकशक्तिस्स्ववेगतः । विमानशक्तिसर्वस्वमपकर्षतितत्क्षणात् ॥१४८५॥
तथाशीतरसरूपवातशक्तिस्स्वभावतः । यानस्थसर्वयंतॄणां बलमाकर्षतिक्रमात् ॥
जलस्यसीकराकारशक्तिःपश्चात्स्ववेगतः । यानमावृत्यसर्वत्राद्दृश्यंकुर्याच्चनान्यथा ॥
बलापकर्षणाद्यानपतनम् तद्वदेवहि । यंतॄणांप्राणहानिश्चयानागोचरमेवच ॥
प्रभवेदेककालेन कष्टात्कष्टतरम् ततः । तस्मात्तत्परिहारायर्यंत्रम् शक्त्युद्गमाभिधम् ॥
विमाननाभिकेंद्रस्य मध्ये संस्थापयेद्दृढम् ॥ इत्यादि ॥

॥ उक्तंहि खेटसंग्रहे ॥

कुजार्कशनिजंभारि बुधमांडलिकोरुरुः । विश्वप्रकाशकश्चेतिग्रहाश्चाष्टावितीरिताः ॥१४९१॥
कृत्तिकाशततारश्चमखामृगशिरातथा । चित्राश्रवणपुष्याश्चीत्यष्टभा इतिनिर्णयः ॥
स्वस्वसंचारपरिधिमंडलकेंद्ररेखासुचारतः । एतेग्रहाश्चनक्षत्रास्सामीप्यंशरदिक्रमात् ॥
प्राप्यन्ते चारक्रमेणतेनशक्त्यष्टकम् भवेत् ॥ इत्यादि ॥

॥ चारनिबंधनेपि ॥

गणितोक्तप्रकारेणग्रहभानांयथाक्रमम् । स्वस्वपरिधिमंडलकेंद्ररेखानुसारतः ॥१४९५॥
चारातिचारादिवशात्सामीप्यंकेवलम् भवेत् । शक्तिसंघर्षणंतेन भवेदन्योन्यमद्भुतम् ॥
एवमेकैकनक्षत्रग्रहयोश्शक्तिघर्षणात् । शक्त्योष्टौप्रजायंतेत्यंतशीतघनात्मकाः ॥ इत्यादि ॥

॥ उक्तंहि शक्तिसर्वस्वे ॥

कृत्तिकाकुजयोश्शक्तिसंघर्षणवशात्स्वतः । काचिच्छत्त्युद्गमानाम शक्तिस्संजायतेक्रमात् ॥
तथैवशततारार्कशक्तिसंघर्षणेनच । शीतज्वालामुखीनामकाचिच्छक्तिःप्रजायते ॥
मखाशन्योश्शक्तिसंघर्षणवेगात्तथैवहि । शैत्यदंष्ट्राभिधाशक्तिर्जायतेसर्वतोमुखा ॥१५००॥
तथामृगशिराबंभारिशक्त्योर्घर्षणेनच । संजायते शीतरसवातशक्तिर्महोज्वला ॥
तथैवचित्राबुधयोश्शक्तिसंघर्षणक्रमात् । शैत्यहैमाभिधाकाचिज्जायतेशक्तिरुज्वला ।
तथाश्रवणमांडल्योश्शक्तिसंघर्षणक्रमात् । जायतेस्फोरणीनामशक्तिश्शीतप्रवाहिका ॥
पूषारुरुकयोश्शक्तिसंघर्षणवशात्तथा । संजायतेशीतघनरसशक्तिर्महोर्मिका ॥
विश्वप्रकाशाश्विन्योश्चशक्तिसंवर्षणवशात्स्वतः । शैत्यमंडूकिनीनाम काचिच्छक्तिःप्रजायते ॥
शैत्योद्गमाभिधाशक्तिश्शीतज्वालामुखीतथा । शैत्यदंष्ट्राशीतरसज्वालाशक्तिस्थथैवच ॥
शैत्यहैमास्फोरणीच शीतघनरसात्मिका । शैत्यमंडूकिनीचेति शक्त्योष्टौप्रकीर्तिताः ॥
एताश्चान्योन्ययोगेन ऋतुकालानुसारतः । भिद्यंतेषट्प्रकारेण शक्तिभेदस्ततोभवेत् ॥

॥ तदुक्तं ऋतुकल्पे ॥

वसंतेपंचधाग्रीष्मेऋतौसप्तप्रकारतः । अष्टधावार्षिकेतद्वत्त्रिधाशरदिवर्णितः ॥



हैमंतेदशधाप्रोक्तोद्विधाशशऋतौक्रमात् । एवंक्रमेणभिद्यंते शक्तयःषट्प्रकारतः ॥१५१०॥
त्रिधायदुक्तंशरदिशक्तिभेदोत्रशास्त्रतः । तत्स्वरूपंप्रसंगत्यासंग्रहेणनिरूप्यते ॥
पश्चादादित्यकिरणसंपर्कात्तायथाक्रमम् । विभिद्यंते त्रिधासम्यक्शक्तिसंमेळनक्रमात् ॥
तासांनामानिशास्त्रोक्तप्रकारेणाभिवर्ण्यते । शीतज्वालाशैत्यदंष्ट्रातथा शैत्योद्गमाक्रमात् ॥
संमिळित्वाशीतरसवातशक्तिरभूत्स्वतः । एवंशैत्यरसज्वाला शैत्यहैमाचस्फोरणी ॥
मिळित्वैतावारिशीतशीकराःशक्तितांययुः । तथाशीतघनरसा शैत्यमंडूकिनीक्रमात् ॥१५१५॥
परस्परंमिळित्वाथमहावेगेनतत्क्षणात् । शीतवातरसप्रावाहिकशक्तित्वमापतुः ॥
एवंशरदिशक्तीनां त्रैविध्यंशास्त्रतःस्मृतम् ॥ इत्यादि ॥

॥ यंत्रस्वरूपमुक्तं यंत्रसर्वस्वे ॥

शक्तित्रयविनाशार्थं यंत्रंशक्त्युद्गमाभिधम् । संग्रहेणयथाशास्त्रम् यथामतिनिरूप्यते ॥
यंतृणांचविमानस्यसप्रमाणंयथाविधि । आदावावरकौकुर्याच्छैत्यग्राहकलोहतः ॥
संकोचनविकासनकीलकद्वयबंधनम् । कुर्याद्विमानावरणाग्रेंत्यभागेचशास्त्रतः ॥१५२०॥
उभयोर्मध्यदंडाग्रे संधिकीलींप्रकल्पयेत् । शीतघ्नदर्पणात्पश्चात्कुर्यान्नाळत्रयंक्रमात् ॥
यंतृस्थानादूर्ध्वमुखे पार्श्वयोरुभयोरपि । विमानयंत्रावरणावावृत्यैवयथाविधि ॥
नाळत्रयंविमानेस्मिन्स्थापयेत्सुदृढंयथा । शीतवातायनीनाळतंत्रीन्नाळत्रयांतरे ॥
संधारयेत्तथैवाग्रेभ्रामणीचक्रमप्यथ । यावच्छक्तित्रयंव्योमयानमावृत्यवेगतः ॥
यानशक्तिंहरेत्तावद्यानावरकतःक्रमात् । निवारयेत्तच्छक्तिवेगम् निश्शेषम् शीघ्रतःक्रमात् ॥
वेगात्संचालयेद्विकसनकीलींयथाविधि । आदावावरकंतेन यंतृणांप्रभवेत्स्वतः ॥
पश्चाद्विमानावरकम् समग्रम् भवतिध्रुवम् । ततश्शक्तित्रयंव्योमयानस्यावरकोपरि ॥
आमूलाग्रम् व्याप्यवेगात्तस्योद्वेगम करिष्यति । पश्चात्संभ्रामयेद्वेगाद्भ्रामणीचक्रमद्भुतम् ॥
चक्रवेगस्समाहृत्य शक्तिवेगम् शनैश्शनैः । शीतवातायनीनाळतंत्रीणांसम्मुखंयथा ॥
प्रेषयेत्तत्तंत्रिमूलकीलकान्भ्रामयेत्ततः । तच्छक्तित्रयवेगस्तु पश्चान्नाळत्रयांतरे ॥१५३०॥
प्रविश्यबाह्याकाशेथ तन्मुखाल्लयमेधते । यंतृणांत्राणनम् तस्माद्यानसंरक्षणंतथा ॥
अदृश्यत्वनिवृत्तिश्चप्रभवेदेककालतः । तस्माच्छत्त्युद्गमम् नामयंत्रमुक्तम् यथाविधि ॥इत्यादि॥

॥ शैत्यग्राहकलोहमुक्तं लोहतंत्रे ॥

चंद्रोत्पलंकौंडिकसोमकंदे विश्वावसुंक्रौंचिकचंद्रमास्ये । वार्ध्यश्वकंवारुणपंचकुट्मले
सिंहास्यकंशंकलवांकपाले ॥
एतान्समांशान्परिशोधितान्क्रमात्संगृह्यशुंडालकमूषमध्ये । संपूर्यचंचूमुखकुंडगर्भे-
संस्थाप्यपंचाननभस्त्रिकामुखात् ॥
वेगेनसंगाल्यचतद्रसंशनैर्यंत्रास्यमध्येपरिपूरयेत्क्रमात् । एवंकृतेशुद्धमतीवसूक्ष्मम्
भवेत्सुशैत्यग्राहकलोहमद्भुतम् ॥ इत्यादि ॥१५३५॥

॥ शीतघ्नदर्पणमुक्तं दर्पणप्रकरणे ॥

सीसंकपालिंवरचंद्रमास्यंपंचांगुलींशैशरिकंतृणांगम् । क्षारत्रयंशुद्धतरम् सुवर्चलंसिंचाणुकं-
सूक्ष्मतरंचवालुकम् ॥
बंभारिकंचांजनिकंकुरंगंपंचोर्मिकंचंद्ररसंशिवारिकम् । एतान्समाहृत्यसमांशतःक्रमाद्वि-
शोधितान्सैंहिकमूषमध्ये ॥
संपूर्यपद्माकरकुंडगर्भेसंस्थाप्यशूर्पोदरभस्त्रिकामुखात् । संगाल्यकक्ष्यत्रिशतोष्णतःक्रमाद्र-
संसमाहृत्यशनैर्यथाविधि ॥
संपूरयेद्यंत्रमुखांतरेक्रमादेवंकृतेशुभ्रमतिदृढंलघु । भवेत्सुशीतघ्नकदर्पणंततश्शुभ्रं-
सुसूक्ष्मंसुमनोहरंच ॥ इत्यादि ॥

॥ अथ वक्रप्रसारणयंत्रः ॥

उक्त्वाशक्त्युद्गमंयंत्रम् संग्रहेणयथामति । वक्रप्रसारणंनाम यंत्रमद्यप्रचक्ष्यते ॥१५४०॥

॥ उक्तंहि क्रियासारे ॥

विमानच्छेदनार्थंयच्छत्रुभिः कृत्रिमान्मिथः । पथियानाभिमुखतः दंभोळिःस्थाप्यतेयदि ॥
यंता मुकुरयंत्राद्यैस्तद्विज्ञायाथतत्क्षणात् । तत्स्थानंदूरेतस्त्यक्त्वा स्वविमानंयथाविधि ॥
वक्रप्रसारणाच्छीघ्रम् योजयेदन्यमार्गतः । तस्माद्यानाधारपार्श्वेकीलचक्रैर्यथाविधि ॥
वक्रप्रसारणंनामकीलयंत्रम् नियोजयेत् ॥ इत्यादि ॥



॥ तदुक्तं यंत्रसर्वस्वे ॥

यानविच्छेदनार्थाय शत्रुभिस्सन्निवेशितैः । दंभोळ्याद्यष्टयंत्रैर्यद्यपायस्संभवेत्क्रमात् ॥१५४५॥
तदपायनिवृत्त्यर्थं विमानस्ययथाविधि । वक्रप्रसारणंनाम कीलयंत्रमिहोच्यते ॥
लोमशाश्वत्थसंजातशुल्बषोडशभागके । लघुक्षित्रिकात्रयंपंचैकांशांजनिकमेवच ॥
सम्मेळ्यशतकक्ष्योष्णवेगात्संगालयेत्ततः । आरारताम्रंप्रभवेत्स्वर्णाकारम् दृढंलघु ॥
वितस्तित्रयमायामम् वितस्तित्रयमुन्नतम् । वर्तुलंकारयेच्चक्रम् नाळदंडेनयोजितम् ॥
यानस्येषादंडमूलगुहावर्ते यथाविधि । चतुरंगुलमायामम् बाहुमात्रंमनोहरम् ॥१५५०॥
वक्रचांगुलचक्रेभ्यःषोडशेभ्योयथाविधि । प्रतिष्ठितम् तैलशुद्धम् दंडद्वयमुखांतरे ॥
चक्रमूलंसमारभ्ययद्दंडांतरतःक्रमात् । यानस्येषादंडमूलगुहावर्तस्थनाळयोः ॥
अष्टधांगुलचक्रेभ्यः कृतमार्गानुसारतः । त्रिपर्वसंधिसंयुक्तशलाकान्तैलसंस्कृतान् ॥
संधार्यविधिवत्पश्चात्तद्दंते शास्त्रतःक्रमात् । चक्रसंधिप्रकल्प्याधाराचक्रमुखांतरे ॥
कीलींसंधारयेत्सम्यगुभयोःपार्श्वयोःक्रमात् । मध्येधूमप्रसारणकीलकौपार्श्वयोस्तथा ॥१५५५॥
संधारयेत्तथाधूमबंधनेकीलकद्वयम् । संधितंत्रीचक्रवर्गैस्तत्तन्मार्गानुसारतः ॥
परस्परंसंधिसंयोचनकीलीनिबंधनम् । कारयेत्सरळेनैवतत्तत्स्थानप्रमाणतः ॥
बाहुमात्रे ताम्रपीठे एतत्सर्वंयथाविधि । प्रकल्प्याधारपार्श्वेथ विमानस्यदृढंयथा ॥
संस्थापयेद्यथाकामंपश्चात्कालानुसारतः । सार्पतिर्यग्दंडवक्रगतिभेदादिभिःक्रमात् ॥
विमानंचोदयेद्बुद्ध्यापुरोभागस्थचक्रतः । तथैवान्यैः कीलकादिसहायैरपिशास्त्रतः ॥१५६०॥
एतद्यंत्रसहायेन भवेद्वक्रगतिःक्रमात् । विमानस्यातिवेगेन तेनदंभोळिकादिभिः ॥
संभवापायनाशस्तु तत्क्षणादेवजायते । विमानरक्षणम् तस्माद्यंतॄणां च विशेषतः ॥
भवेत्तस्मात्संग्रहेणयथावच्छास्त्रतःक्रमात् । वक्रप्रसारणम् नामयंत्रमुक्तंमनोहरम् ॥ इत्यादि ॥

॥ अथ शक्तिपंजरकीलकयंत्रनिर्णयः ॥

एवमुक्त्वावक्रप्रसारणयंत्रमतःपरम् । शक्तिपंजरकीलकयंत्रमद्यप्रचक्षते ॥

॥ तदुक्तं क्रियासारे ॥

विमानसर्वांगसंधिस्थानभेदेषुशास्त्रतः । विमानांगेषुसर्वत्रत्वामूलाग्रंयथाविधि ॥१५६५॥

विद्युत्संचोदनार्थायतत्तत्कालानुसारतः । शक्तिपंजरकीलकयंत्रसंस्थापनंक्रमात् ॥
विमानमध्यकेंद्रेथकुर्याच्छास्त्रविधानतः ॥ इति ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

विद्युत्संचोदनार्थाय यानसर्वांगसंधिषु । शक्तिपंजरकीलकयंत्रनिर्णयउच्यते ॥
कांतक्रौंचिकलोहान्त्रीन्दशाष्टनवभागतः । संपूर्यमूषिकामूषामुखेपश्चाद्यथाविधि ॥
निधायातपकुंडेथ शतकक्ष्योष्णतःक्रमात् । संगाल्यतन्मुखेविद्युच्छक्तिंसंयोजयेद्दश ॥१५७०॥
ततोयंत्रमुखेवेगात्पूरयेदेकतःक्रमात् । अत्यंतमृदुळंशुद्धम् शक्तिगर्भाभिधंदृढम् ॥
भवेल्लोहंतेनयंत्रम् कुर्यात्तद्विधिरुच्यते । बाहुमात्रोन्नतंतावदायामम् द्रोणिवत्सुधीः ॥
पीठंकुर्याच्छक्तिगर्भलोहेनैवयथाविधि । पीठमूले तथामध्येतदंतेच यथाक्रमम् ॥
अर्धचंद्राकारमुखकीलस्तंभान् दृढंयथा । आदौसंस्थापयेत्पश्चात्पट्टिकांताम्रनिर्मिताम् ॥
संयोजयेत्ततःकीलशंकुभिः बंधयेद्दृढम् । तंत्रीन्शलाकान्तच्छक्तिगर्भलोहेनशास्त्रतः ॥१५७५॥
सच्छिद्रदंडनाळान्त्रीन्कृत्वापश्चाद्यथाविधि । दंडच्छिद्रेषुसर्वत्रशलाकान्योजयेत्ततः ॥
सप्रमाणंलोहतंत्रीन्शलाकोपरिवेष्टयेत् । वर्तुळंपंजरंतेनभवेत्सुदृढमद्भुतम् ॥
तत्पंजरंताम्रपट्टिकोपरिस्थापयेत्ततः । विद्युच्छक्तिंपंजरस्याधोभागेन्यसेत्क्रमात् ॥
पंजरस्थशलाकानांतंत्रीणामपिशास्त्रतः । विद्युत्संचोदनार्थायकीलकंस्थापयेत्तथा ॥
विमानस्थांगयंत्राणां द्वात्रिंशदंघ्रिषुक्रमात् । विद्युत्संचोदनार्थायोपसंहारार्थमेवच ॥१५९०॥
अनुलोमविलोमाभ्यां द्वात्रिंशत्कीलकान्क्रमात् । संधारयेत्सूक्ष्मकीलींशंकुभिस्सुदृढंयथा ॥
विद्युत्प्रयोगम् सर्वत्रकर्तुंतेनयथोचितम् । भवेद्विमानेशास्त्रोक्तरीत्यास्वेष्टप्रकारतः ॥
दिक्प्रभेदेनसर्वत्रगतिवैचित्र्यतःक्रमात् । भवेच्चोदयितुम् व्योमयानंतस्माद्यथाविधि ॥
तस्मादुक्तम् समासेनविद्युत्पंजरयंत्रकम् ॥ इत्यादि ॥

॥ अथ शिरःकीलकयंत्रनिर्णयः ॥

इत्युक्त्वाशक्तिपंजरयंत्र मद्ययथाविधि । संग्रहेणशिरःकीलकयंत्रंसंप्रचक्षते ॥१५९५॥

॥ तदुक्तं क्रियासारे ॥

विमानोपर्यशनिपातम् मेघबृंदाद्भवेद्यदा । तदाविनाशमायाति व्योमयानोतिशीघ्रतः ॥



तस्मात्तत्परिहाराय शिरःकीलकयंत्रकम् । शिरोभागेविमानस्यस्थापयेच्छास्त्रतःक्रमात् ॥
इत्यादि ॥

॥ यंत्रस्वरूपमुक्तं यंत्रसर्वस्वे ॥

यदपायोविमानस्य भवेदशनिपाततः । तदपायनिवृत्त्यर्थं शिरःकीलकयंत्रकम् ॥
संग्रहेणप्रवक्ष्यामि शास्त्रोक्तेनैववर्त्मना । यावत्प्रमाणम् यानस्यशिरसस्तावदेवहि ॥
कुर्याच्छत्रिंशलाकाद्यैः लोहावरणतःक्रमात् । विषकंठाख्यलोहेनैवान्यथानिष्फलंभवेत् ॥
तेनैवबाहुमात्रेणतद्दंडम् पीठमेवच । कुर्याच्चक्राकृतिं पश्चात्बकतुंडिललोहतः ॥१६०१॥
त्रिचक्रकीलकान्कृत्वात्रीन् विमानस्यशास्त्रतः । आदौमध्येतथाचांते स्थापयित्वाततःपरम् ॥
सदंडम् स्थापयेच्छत्रंकीलकद्वयमध्यतः । मणिमग्निकुठाराख्यम् लोहपंजरसंयुतम् ॥
किरीटवच्छिरसिस्थापयेत्सरळंयथा । त्रिचक्रकीलभ्रमणकीलकंयंत्रपार्श्वतः ॥
स्थापयित्वायथाशास्त्रम् कुलिशध्वंसलोहतः । कृत्वातंत्रीं मणिस्थाननाळरंध्राद्यथाविधि ॥
त्रिचक्रभ्रामणीकीलस्थानमूलावधिक्रमात् । समाहृत्याथतत्स्थानमध्येसंधारयेत्ततः ॥१६०६॥
तन्मुखेशब्दनाळंचसकीलम् स्थापयेद्दृढम् । सुरंजिकादर्पणेनतद्यंत्रावरणंसुधीः ॥
कुर्याच्छास्त्रोक्तयिधिनापश्चादावरयेद्दृढम् । यदास्यादशनिपातसूचकंघनगर्जितम् ॥
तत्क्षणाद्यंत्रावरणदर्पणस्त्रुटितोभवेत् । पश्चात्तंत्रीमुखनाळरंध्राच्छब्दःप्रजायते ॥
अत्यंतचलनंतेन भवेत्तंत्र्यांस्वभावतः । दृश्यंते यंतृणां यानेचिह्नान्येतान्यदाक्रमात् ॥
पतत्यशनिपातोद्य चेतिमत्वातिशीघ्रतः । त्रिचक्रकीलीभ्रमणम् कुर्यादत्यंतवेगतः ॥१६११॥
भ्राम्यतेतेनतच्छत्री शतलिंकप्रमाणतः । पश्चात्तन्मणिकीलम् च भ्रामयेद्वेगतःक्रमात् ॥
तेनसंभ्रमतेवेगात्तन्मणिस्सर्वतोमुखः । छत्रिवेगादशनिपातवेगशांतिर्भविष्यति ॥
मणिवेगादशनिपातः क्रोशांतेयानतोभवेत् । विमानरक्षणंतेन यंतृणांपालनंतथा ॥
भवेत्तस्माच्छिरःकीलयंत्रमुक्तम् यथाविधि ॥ इत्यादि ॥

॥ अथ शब्दाकर्षणयंत्रनिर्णयः ॥

एवमुक्त्वा शिरःकीलयंत्रमत्रयथाविधि । शब्दाकर्षणयंत्रोद्यसंग्रहेणप्रकीर्त्यते ॥१६१५॥

॥ तदुक्तं क्रियासारे ॥

अष्टदिक्षुविमानस्यकोशाद्द्वादशकोपरि । सतंत्र्यतंत्रीमार्गेणमृगपक्ष्यादिभिस्तथा ॥
संताडनभ्रामणाद्यैः मनुष्यैरष्टयंत्रकैः । गूढेनवाप्रकाशेन येशब्दास्संभवंतिहि ॥
तेषांसंग्रहणार्थाय शब्दाकर्षणयंत्रकम् । व्योमयानभुजेसम्यक्स्थापयेत्विधिवत्सुधीः ॥

इत्यादि ॥

॥ यंत्रस्वरूपमुक्तं यंत्रसर्वस्वे ॥

चतुरश्रंवर्तुलंवा शुद्धबैंडाललोहतः । पीठंकृत्वाथतन्मध्ये शंकुंसंस्थाप्यपार्श्वयोः ॥
संकल्पस्वरवादित्र शब्दभाषापकर्षकम् । रोरुवापक्षिणोनोचेद्गृंजनीपक्षिणोपिवा ॥१६२०॥
शुद्धीकृतेनदेहस्थ चर्मणामृदुळेनच । कृत्वाकंदुकवत्गोळद्वयंसूक्ष्मंलघुदृढम् ॥
स्थापयेद्विधिवत्पश्चात्तन्मध्येकटनद्रवम् । संपूर्यसुरफादर्शपात्रेसंस्थापयेत्क्रमात् ॥
ध्वन्याकर्षणघंटार लोहनिर्मितमद्भुतम् । तंत्रीगुच्छसमायुक्तम् शब्दोन्मुखशलाककम् ॥
दृढंपिंडद्वयोर्मध्येद्रावकोपर्यथाक्रमम् । प्रतिष्ठाप्याथक्वणकदर्पणावरणंक्रमात् ॥
कृत्वामूलेंगुष्ठमात्र चक्रग्रंधित्रयंततः । संधारयेत्तदारभ्य शलाकांतंयथाविधि ॥१६२५॥
अत्यंतसूक्ष्मान्मृदुळान्तंत्रीन्संयोजयेत्क्रमात् । एतत्तंत्रीन्समावृत्यन्यग्विलंसूक्ष्मरंध्रकम् ॥
क्वणादर्शेनरचितंकरंडमुपरिन्यसेत् । द्रोणास्यपात्रेतेनैवकृतम् तस्योपरिक्रमात् ॥
संस्थापयेत्ततस्तस्मिन्पूर्वपश्चिमयोस्तथा । दक्षिणोत्तरतश्चैव रुदंतीरटिकाभिधान् ॥
संयोजयेन्मणीन्शुद्धान् चत्वारिसमरेखतः । मणिमंतरतः कृत्वासूक्ष्मनाळान्यथाविधि ॥
दर्पणेनकृतान्शुद्धान् चतुर्दिक्षुदृढंयथा । स्थापयेदथतस्योर्ध्वप्रदेशे शब्दफेनकम् ॥१६३०॥
तस्योपरियथाशास्त्रम् कुर्यादावरणम् ततः । तस्मिन्संधारयेत्सूक्ष्मशंकून्संशोधितान्दृढान् ॥
पश्चात्क्वणादर्शकृतावरणंतत्प्रमाणतः । तस्योपरिन्यसेदष्टसूक्ष्मछिद्रसमन्वितम् ॥
एकैकछिद्रमार्गेणांतश्शंकुमुखांतरात् । सूक्ष्मतंत्रीन्समाहृत्यन्यसेदावरणोपरि ॥
तन्मध्येंगुलमानेनछिद्रंकृत्वायथाविधि । सिंहास्यदंडनाळंचमध्येसंस्थापयेत्क्रमात् ॥
वातापकर्षकंचक्रंषोडशारम् सुसूक्ष्मकम् । न्यसेत्तस्यपुरोभागे तंत्रीसंवेष्टितंयथा ॥१६३५॥
एवंक्रमेणाष्टदिक्षुसूक्ष्मचक्राणिविन्यसेत् । पूर्वोक्तसिंहास्यमुखेष्टदिक्षुयथाक्रमम् ॥



प्रदक्षिणावर्तकीलचक्रान्संस्थापयेदथ । शुद्धवाजीमुखलोहकृतवर्तुलपट्टिकान् ॥
सुदृढान्छषकाकारान्सरळंस्थापयेत्ततः । पूर्वोक्तावरणाष्ट छिद्रमुखसंस्थितान्क्रमात् ॥
तंत्रीन्संगृह्यविधिवत्तेषुसंयोजयेत्क्रमात् । तथैववाताहरणचक्रस्थानाद्यथाविधि ॥
सरंध्रानत्यंतसूक्ष्मतंत्रीनाहृत्यशक्तितः । सिंहास्यस्थाष्टछषकपट्टिकामूलसंधिषु ॥१६४०॥
संयोज्यशब्दफेनस्थशंकूनां मूलकेंद्रतः । द्रवपात्रस्थमणिमावृत्यतंत्रीन्यथाक्रमम् ॥
समाहृत्याथविधिवत्बध्नीयात्सुदृढंयथा । वातसंयोजनाच्चक्रभ्रमणम् भवतिस्वतः ॥
संभ्राम्यतेमणिःपश्चात्तेनसव्यापसव्यतः । तद्वेगाद्भ्राम्यते शब्दफेनचक्रमतःपरम् ॥
भ्राम्यंतेंतश्शंकुमूलचक्राण्यपियथाक्रमम् । तस्मात्सिंहास्यनाळस्थ चक्राण्यष्टविशेषतः ॥
भ्राम्यंतितेनध्वन्याकर्षणघंटारलोहतः । कृतशब्दोन्मुखशलाकचालनम् भवेत्स्वतः ॥१६४५॥
रोरुवागृंजनीचर्मकृतगोळद्वयंततः । शलाकचालनात्सर्वशब्दान्तत्तत्स्वरैस्सह ॥
संगृह्यस्वांतरे पश्चात्सन्नियम्यतिनान्यथा । तन्मूलकीलचलनात्पुनस्सिंहास्यमार्गतः ॥
द्रोणास्यपात्रेवेगेनप्रविश्याथयथाक्रमम् । परश्रोत्रग्रहणयोग्यान्सर्वान्शब्दान्स्फुटंयथा ॥
करोतितत्क्षणादेवसर्वदिङ्मुखतःक्रमात् । तत्तद्दिश्यागतंशब्दंश्रुत्वायंतासुधीस्स्वयम् ॥
परचक्रविचारंयत्सर्वं विज्ञाययंत्रतः । इतिकर्तव्यतांज्ञात्वास्वयानपरिपालने ॥१६५०॥
कुर्यात्प्रयत्नं विधिवदन्यथानाशमेधते । तस्मादुक्तंसमासेन शब्दाकर्षणयंत्रकम् ॥
शब्दाकर्षणयंत्रास्तुद्वात्रिंशद्भेदतःक्रमात् । शास्त्रेषुनिर्णितास्सम्यग्यंत्रशास्त्रविशारदैः ॥
एतच्छब्दाकर्षणाख्ययंत्रंयानांगतःपृथक् । कृतमित्यवगंतव्यम् सर्वैश्शास्त्रप्रमाणतः ॥इत्यादि॥

॥ एतद्यंत्रोपयुक्तवस्तुस्वरूपवर्णनं ॥

॥ बैडालिकलोहमुक्तं लोहसर्वस्वे ॥

क्ष्विंकाशर्करकांतवज्रकमठाडिंभारिघोंटाकरग्रथिनीशुल्बविरंचिकर्णपटलीगुंभाळिदंभोळिकाः ।
क्षारक्रांतिकसिंहपंचदळिनीपारांजनक्षोणिकावीरस्वर्णसुरंजिनीमृडरुटीकंसार्तिपारावताः ॥
एतान्संगृह्यविधिवच्छुद्धिंकृत्वात्रिवारतः । शशमूषामुखेवस्तून्पूरयेत्समभागतः ॥१६५५॥
मंडूककुंडमध्येसंस्थाप्यपंचास्यभस्त्रिकात् । उष्णद्विशतकक्ष्यप्रमाणेनध्मापयेत्क्रमात् ॥
आनेत्रांतंगालयित्वासमाहृत्याथतद्रसम् । वेगान्निसिंचेद्यंत्रास्ये शास्त्रोक्तविधिनाक्रमात् ॥

एवंकृतेत्यंतशुद्धम् स्पर्शनात्पुष्टिवर्धनम् । नीलवर्णंसुसूक्ष्मंचसुदृढम भारवर्जितम् ॥
लोहंबैडालिकंनाम भवेद्भास्वरमद्भुतम ॥ इत्यादि ॥

॥ रुटनद्रावकमुक्तं मूलिकार्कप्रकाशिकायां ॥

कनककरंडकगुंजापार्वणिचंचूलिभंटिकारंभाः । विश्वेशचंडिकामरशुंडालिकबर्बरास्यसौरंभाः ॥
प्राणक्षारत्रितयविरंचिकटम्कणार्किकासुरभीः । सम्मेळ्यद्रवयंत्रे वेदानलमूर्तितारसाग-
रार्कांशान् ॥१६६१॥
तथैवपंचदशगिरिगजदिगवतारनेत्रबाणांशान् । संगृह्यापिचत्रिंशद्द्वादशविंशाष्टभाग-
संख्यातः ॥
संगृह्णीयाद्द्रावकमष्टोत्तरशतकक्ष्योष्णमानेन । रुटनद्रावकमेतद्भवति विशुद्धम सुसूक्ष्मकं-
पीतम ॥ इत्यादि ॥

॥ घंटारवलोहमुक्तं लोहतंत्रे ॥

कांस्यमाराररुचकौगारुडम् शल्यकृंतनम । पंचास्यम् विरणंरुक्मम् शुकतुंडंसुलोचनम् ॥
दशलोहानिमान्सम्यक्शुद्धिंकृत्वायथाविधि । तारानलार्कनयनमुन्यब्धिशरवासराः ॥१६६५॥
वेदावतारभागांशप्रकारेण यथाक्रमम । संपूर्यशुक्तिमूषायां मृत्पटंवेष्टयेद्दृढम् ॥
अलाबुकुंडमध्येथस्थापयित्वायथाविधि । कक्ष्याणांपंचशतोष्णप्रमाणेनातिवेगतः ॥
आनेत्रावधिसंगाल्यपश्चाद्यंत्रमुखेशनैः । निषिंचेद्विधिवत्पश्चात्रक्तवर्णं दृढंमृदु ॥
सूक्ष्मात्सूक्ष्मतरंभारहीनंबलविवर्धनम् । भवेद्घंटारलोहाख्यम् सर्वशब्दापकर्षकम् ॥इत्यादि॥

॥ कणकदर्पणमुक्तं दर्पणप्रकरणे ॥

काकारिंकरिशल्यकंगरदकंक्षाराष्टकम सिंहळम् शल्याकंवरशर्करम् बुडिलकंज्वालामुखं-
तुंडिलम् ।
बैडालंशुकतुंडकम् रविमुखम् चंचूलिकंगार्थिवम् लुंटाकंवरतालकम कुवरकंकंबोदरम्
कामुकम् ॥१६७०॥
संगृह्येतान्यथाशास्त्रम् शुद्धिंकृत्वात्रिवारतः । पद्माख्यमूषामध्यास्ये पूरयित्वासमांशतः ॥
कुंडेपद्माकरेस्थाप्य शतभस्त्राद्यथाविधि । कक्ष्याणांसप्तशतोष्णप्रमाणेनातिवेगतः ॥



संगाल्यतद्रसंनीत्वायंत्रास्येपूरयेच्छनैः । एवंकृतेभवेच्छुद्धंकणदर्पणमद्भुतम् ॥ इत्यादि ॥

॥ रुदंतीमणिरुक्तोमणिप्रकरणे ॥

क्षारत्रयमांजनिकंकांतम् सज्जीकंबरकर्णवराटिं । माक्षिकशर्करस्फाटिककांस्यम पारवतालक-
सत्वंगैरम् ॥
रुरुकंरौच्यककुडुपौगरंदम् पंचमुखंशिंगरशुंडलिकम् । एतानेकाधिकत्रिंशतिवस्तून्संपूर्याणिक
मूषास्यमुखे ॥१६७५॥
वरशौक्तिकव्यासटिकामध्येसंस्थाप्यदृढंवरभस्त्रमुखात् । संगाल्यत्र्युत्तरशतकक्ष्योष्णेन-
निसिंचेन्मणियंत्रमुखे ॥
पश्चात्सुदृढम् बलदम् भवतिरुदंतीमणिरुत्कृष्टम् ॥ इत्यादि ॥

॥ रुटिकामणिरुक्तस्तत्रैव ॥

फेनंचमरीनखमुखशल्यंचुंबकपार्थिवशर्करधूमान् । पारदप्राणक्षारस्फटिकाञ्जागवराटिक-
माक्षिकशुंडान् ॥
रुंडककुडुपसुवर्चलवीर्यान्जंबालिकवरबैडालिकदंतान् । रंजकमंचिषपार्वणिरुक्मान्कौशिक-
नखवरमौक्तिकशुक्तीन् ॥
शुद्धानेतान्समभागांशान्नखमुखमूषामुखमध्यबिले । संपूर्यमहोदरकुंडमुखेसंस्थाप्यच-
षण्मुखभस्त्रमुखात् ॥१६८०॥
विधिवत्संगाल्यानेत्रांतम् मणियंत्रमुखे वेगात्सिंचेत् । पश्चात्सुदृढम् श्यामलवर्णंप्रभवति-
रुटिकामणिभारयुतम् ॥ इत्यादि ॥

॥ शब्दफेनमुक्तं शब्दमहोदधौ ॥

बाडबारवमाकाशाजलात्प्राणनमेवच । बाताग्निखमुखात्तद्वच्छिलादनुकरध्वनिम् ॥
किरणानांस्फोटनाख्यशक्तिंशैवालवल्कलम् । समुद्रफेनंग्रीवाकंजल्पाकंमाळुलम् तृणम् ॥
गृभ्णारकम् रुद्रशल्यम् गोकर्णंमुसलितथा । सप्तद्वाविंशतिःपंचचत्वारिंशत्त्रयोदश ॥
द्वात्रिंशदेकोनविंशदष्टत्रिंशाच्चतुर्दश । द्वाविंशदष्टत्रिंशत्द्विचत्वारिंशत्त्रयोदश ॥१६८५॥

पंचविंशन्नवतथात्रयोविंशद्यथाक्रमम् । संगृह्यविधिवच्छब्दफेनंपकात्प्रकल्पयेत् ॥

॥ उक्तंहितत्रैव ॥

शैवालादिमुसल्यंतान्वस्तून्संशोध्यशास्त्रतः । तत्तत्प्रमाणानुसाराद्यंत्रेफेनाकरेक्रमात् ॥
संस्थाप्यपाचयेत्सम्यग्यथाविधिदिनत्रयम् । घटिकार्धादेकवारंकीलींसंकलनाभिधां ॥
भ्रामयेद्वेगतोनित्यंफेनवद्भवतिक्रमात् । यंत्रात्तत्फेनमाहत्यशक्तिसंमेळनाभिधे ॥
यंत्रेनियोजयेत्पश्चान्नाळषट्कैर्यथाक्रमम् । प्राणनादिस्फोटनाख्यशक्त्यंतंक्रमशस्सुधीः ॥
तत्तत्संख्यानुसारेणशक्तिमेकैकतःक्रमात् । पूर्वोक्तनाळतोयंत्रस्थितफेनोपरिक्रमात ॥१६९१॥
संमेळयेद्यथाशास्त्रंसावधानान्मुहुर्मुहुः । समीकरणचक्रस्यकीलकंपट्टिकान्वितम् ॥
पार्श्वेयंत्रस्यविधिवद्भ्रामयेत्कालमानतः । मंदोष्णात्पाचयेत्पश्चादेवमेवयथाक्रमम् ॥
प्राणनादिस्फोटनांतशक्तिसंयोजनंबुधः । कुर्यात्पृथक्पृथक्पश्चादातपेसन्निवेशयेत् ॥
वेद्युच्छक्तिसुसंयोज्यपंचाशीतिप्रमाणतः । तत्फेनमध्येयंत्रस्यनाळात्संचोदयेच्छनैः ॥१६९५॥
तयासंपाचयेत्पश्चाद्दिनषट्कम् यथाविधि । ततस्संगृह्यतत्फेनम् तद्यंत्रात्सावधानतः ॥
वाजीमुखाख्यलोहस्यपेटिकायांन्यसेद्दृढम् । एवंक्रमेणविधिवच्छब्दफेनम् विचारतः ॥
कृतंचेत्सर्वशब्दापकर्षणंकारयेत्स्वतः ॥ इत्यादि ॥

॥ वाजीमुखलोहमुक्तं लोहतंत्रे ॥

गुल्बत्रयगरुडद्वयक्ष्विकाष्टकवीरद्वयकांतत्रितयंवरबंभारिकमेकम् । कंसारिकत्रितयंवर-
पंचाननषट्कंगौरीमुखद्वितयंवरशुंडालकषट्कम् ॥
तान्दशवस्तूनतिशुद्धान्परिगृह्यशुंडालकमूषामुखमध्येविनियोज्य । शूर्पास्यककुंडोपरि-
संस्थाप्याथवज्राननभस्त्रेणविगाल्यार्किकवज्राननयंत्रे ॥१७००॥
पूर्यचकीलींतद्रससंस्करणार्थं वेगेनभ्रमयेदथशास्त्रोक्तविधानात । क्रियतेयद्येवंवरवाजी-
मुखलोहंप्रभवेदतिमृदुळंलघुपिंगळवर्णं ॥ इत्यादि ॥

॥ अथपटप्रसारणयंत्रं ॥

तत्वाशब्दाकर्षणाख्ययंत्रमद्ययथाविधि । पटप्रसारणंयंत्रम् संग्रहेणनिरूप्यते ॥



॥ तदुक्तं क्रियासारे ॥

दिक्प्रभेदेनयानस्यगमनार्थं तथैवहि । अपायोपायसांकेतविज्ञानार्थंसमासतः ॥
पटप्रसारणंयंत्रम् क्रमाद्यानभुजेन्यसेत् ॥ इत्यादि ॥

॥ तदुक्तं पटकल्पे ॥

रक्तकृष्णश्वेतनीलपीतवर्णादिभिःक्रमात् । रंजितंपटमेकंतुकुर्याच्छास्त्रविधानतः ॥१७०५॥
मुंजकारक्तकल्याणगोमारीशंबरस्तथा । शणराजावर्ततृणकव्यादान्शास्त्रतःक्रमात् ॥
त्रिवारंशोधयित्वाथकृत्वासूर्यपुटत्रयम् । पाचनायंत्रमध्येतद्वस्तून्संप्राप्यशास्त्रतः ॥
पाकमानानुसारेणत्रिदिनंपाचयेत्क्रमात् । कुट्टिणीयंत्रमध्येथतत्संगृह्यन्यसेत्ततः ॥
यामत्रयम् कुट्टिणीकीलकचालनतःक्रमात् । समीकृत्ययथाशास्त्रम् पाचनेथपुनःपचेत् ॥
पटक्रियायंत्रमुखेस्थापयित्वाततःपरम् । कीलीचालनतस्सम्यगोतप्रोतात्मनाक्रमात् ॥१७१०॥
समीकृत्वाथविधिवत्पटम् कुर्यान्मनोहरम् । सप्तवर्णादिभिस्सम्यग्रंजितंस्याद्यथास्वतः ॥
संगृह्यतत्पटंदीर्घदंडेसंवेष्ट्यशास्त्रतः । तद्दंडंत्रिमुखीनाळयंत्रेसंधार्ययत्नतः ॥
सकीलकंयानभुजेस्थापयेत्सुदृढंयथा । रक्तादिवर्णसंक्लृप्तपटसंदर्शनात्सुधीः ॥
वर्णसंकेततोऽपायादीन्विज्ञाययथाविधि । तिर्यग्गमनतोयानम् यंतादूरेनियोजयेत् ॥
तथैवश्वेतपीतादिपटसंचालनक्रमात् । दिक्प्रभेदंसुविज्ञायतत्संकेतानुसारतः ॥१७१५॥
विमानंचोदयेत्प्राज्ञोनानागतिप्रभेदतः । विमानरक्षणंतेनप्रभवेन्नात्रसंशयः ॥
तस्मादेतद्यंत्रमुक्तंसमासेनयथाविधि ॥ इत्यादि ॥

॥ अथदिशांपतियंत्रः ॥

पटप्रसारणंयंत्रमेवमुक्त्वायथाविधि । संग्रहेणदिशांपतियंत्रमद्यविविच्यते ॥

॥ तदुक्तं क्रियासारे ॥

आकाशगमनेव्योमयानस्याष्टदिशिक्रमात् । ग्रहांशुपथसंधीनामंतरालेऋतुक्रमात् ॥
प्रजायंतेपंचदशकौबेराख्याःप्रभंजनाः । तैर्विमानप्रयातॄणां चर्मसंशोषणम् बवेत् ॥१७२०॥

पश्चात्श्वासादयोरोगास्संजायंतेतिदुःखदाः । तस्मात्तत्परिहाराय विमानस्य यथाविधि ॥
दिशांपतियंत्रमपिवामकेंद्रभुजेन्यसेत् ॥ इत्यादि ॥

॥ यंत्रस्वरूपमुक्तं यंत्रप्रकरणे ॥

कौबेरवातविषसंशोषणार्थंयथाविधि । दिशांपतिंप्रवक्ष्यामियंत्रंलोकोपकारकम् ॥
चतुरश्रंवर्तुलंवापीठंकुर्याद्यथाविधि । पार्वणीदारुणाद्रावसंस्कृतेनत्रिधाक्रमात् ॥

॥ पार्वणीदारुस्वरूपमुक्तमगतत्वलहर्यां ॥

प्रतिपर्वणिपर्वाणिप्रभवेदिक्षुदंडवत् । यस्मिन्नविरळंतत्तुपार्वणीदार्विंतीरितम् ॥१७२५॥
रक्तवर्णंदीर्घपर्णं रक्तपुष्पविराजितम् । सूक्ष्मकंटकसंयुक्तम भुजंगविषनाशनम् ॥
अत्यंतखट्वसारंच भूतप्रेतनिवारकम् । कृष्णपक्षेमुकुळितम् पार्वणीदारुलक्षणम् ॥ इत्यादि ॥
एकोनविंशतसंख्याकदर्पणेनयथाविधि । बाहुमात्रंनाळशंकुम् नवद्वारसमन्वितम् ॥
नवकीलकसंयुक्तम् नवतंत्रीभिरन्वितम् । कृत्वासंस्थापयेत्पीठमध्ये शास्त्रविधानतः ॥
तन्मूलदेशतस्सम्यगीशान्यादिक्रमात्ततः । अष्टदिक्ष्वष्टकेंद्राणिकल्पयेत्समसंख्यया ॥१७३०॥
विस्तृतास्यम् सूक्ष्ममूलम् मध्येवर्तुलरूपकम् । वितस्तिद्वयमायामम् षड्वितस्त्युन्नतम् तथा ॥
वितस्तित्रयमायामवर्तुळंनाळमध्यमे । एवंक्रमेणकर्तव्यम् नाळाष्टकमतःपरम् ॥
गणितोक्तविधानेनपत्राष्टकविराजितम् । पद्ममेकम् कल्पयित्वाशंकुनोपरिविन्यसेत् ॥
शंकुरंध्रेष्वष्टनाळान्सम्यक्संधारयेद्दृढम् । गोभिलोक्तप्रकारेणावरणम् शशचर्मणा ॥
नाळाष्टकान्तर्बाह्येचकर्तव्यम् सप्रमाणतः । मांचूलिकावल्कलंतन्मुखमध्ये नियोजयेत् ॥
नाळस्थतंत्रीस्संगृह्यपद्माष्टदळसंधिषु । संधारयेद्यथाशास्त्रंपद्मोपरियथाक्रमम् ॥१७३६॥

॥ मांचूलिकावल्कलमुक्तं पटप्रदीपिकायां ॥

संतीमृडरंजिकासुरुचिकासंवर्तकीफाल्गुणी चंचोरारुणकांतकंकुदळनीमंडूरिकामारिका ॥
कारीकपिवल्लरीविषधरासंवालिकामंजरी रुक्मांगावरधुंडिकार्कगरुडागुंजावरीजंझरा ॥
षांवरकांडपिंजुलिमथत्वङ्मंजरीकंक्रमात् संगृह्यावरपाकयंत्रमुखतस्संपूर्यसंपाचयेत् ॥



क्रौंचद्रावकसेचनेनचपुनःपाकेनसंक्षालनात्तच्छास्त्रोदित वर्त्मनात्रिदिनतःपाकः-
प्रमाणाद्यदि ॥१७४०॥
कुर्याच्चेदतिशुभ्रवर्णममलंभद्रंमनोज्ञंऋजु श्रेष्ठाच्छ्रेष्ठतरंभवेत्सुमृदुळंमांजूळिकावल्कलम् ॥
इत्यादि ॥

वातपामणिमाहृत्यपश्चान्मध्येप्रकल्पयेत् । अंशुपादर्पणंतस्यपुरोभागेततोन्यसेत् ॥
कौबेरवातसंसर्गो दिक्प्रभेदक्रमात्स्वतः । संभवेद्यदिमार्तांडकिरणेषुमनागपि ॥
तदांशुपादर्पणस्य मुखंदिगनुसारतः । नीलरक्तप्रभामिश्रवर्णं भवतिनान्यथा ॥
दर्पणांतरसंधानात्तद्विज्ञाययथाविधि । कीलकान्नवसंख्याकान्भ्रामयेदतिवेगतः ॥१७४५॥
एकैककीलवेगेनतत्तन्नाळांतरेक्रमात् । शक्तिसंयोजनाच्चैव शशचर्मणिवेगतः ॥
जायतेसम्मार्ष्णिकाख्याकाचिच्छक्तिर्महत्तरा । मंजूळिकावल्कलम् तच्छक्तिमाहृत्यवेगतः ॥
चोदयेत्पद्मपत्रेषुतत्पत्राण्यपितंत्रिभिः । तच्छक्तिंप्रेरयेद्वातपामणिं स्वीयशक्तितः ॥
वातपामणिःकौबेरविषवायुमतःपरम् । सम्मार्ष्णिकासहायेन पिबेदत्यंतवेगतः ॥
पश्चात्पद्माष्टदळमध्यस्थनाळमुखांतरात् । कौबेरवातसंबंधविषशक्त्यतिवेगतः ॥१७५०॥
लयमायातिबाह्याकाशस्थवायौस्वभावतः । पश्चात्खेटस्थयंतॄणामारोग्यंभवतिध्रुवम् ॥
तस्माद्दिशांपतियंत्रमेतदुक्तंयथाविधि ॥ इत्यादि ॥

॥ एकोनत्रिंशद्दर्पणमुक्तं दर्पणप्रकरणे ॥

उरगत्तकपंचमुखम् व्याघ्रदंतंचसैकतम् । लवणंपारदंसीसम् श्वेतनिर्यासमृत्तिका ॥
स्फाटिकंरुरुकंवीरम् मृणाळंरविकर्पटिं । चंचोलंवालजम् पंचप्राणसारंशशोडुपम् ॥
त्रिसप्तपंचद्वाविंशाचतुःपंचदशास्तथा । द्विपंचविंशतिस्सप्तत्रिंशत्पंचदशास्तथा ॥१७५५॥
चत्वारिंशत्त्रयोविंशतसप्तविंशत्त्रयोदश । एकोनविंशाष्टदशभागसंख्यानुसारतः ॥
त्रिवारंशोधयित्वाष्टादशवस्तून्यथाविधि । मत्स्यमूषामुखेसम्यगापूर्यविधिवत्ततः ॥
नळिकाकुंडमध्ये संस्थापयित्वादृढंयथा । एकोनशतकक्ष्योष्णप्रमाणेनयथाविधि ॥
गालयेद्गोमुखीभस्त्रात्पश्चाद्यंत्रमुखेन्यसेत् । एवंकृतेपिंगळाख्यदर्पणंभवतिदृढम् ॥
एतदेकोनविंशतसंख्याकमितिशास्त्रेभिवर्णितम् ॥ इत्यादि ॥

एवमुक्त्वासंग्रहेणदिशांपतिमतःपरम् । पट्टिकाभ्रकयंत्रस्वरूपमत्रनिरूप्यते ॥१७६१॥

॥ तदुक्तं क्रियासारे ॥

ग्रहसंधिसमुद्भूत ज्वालामुखविनाशने । पट्टिकाभ्रकयंत्रंचयानावरणमध्यमे ॥
स्थापयेद्विधिवद्धीमान्सर्वदुःखविनाशनम् ॥

॥ उक्तंहि यंत्रसर्वस्वे ॥

ग्रहसंचारमार्गेषुग्रहाणांतुपरस्परम् । एकरेखाप्रवेशेनग्रहसंधिर्भवेदतः ॥
ज्वालामुखभिदाकाचिद्विषशक्तिःप्रजायते । यानारूढास्तयासर्वे मरिष्यंतिनसंशयः ॥१७६५॥
तस्मात्तच्छक्तिनाशायसंग्रहेणयथाविधि । पट्टिकाभ्रकयंत्रस्वरूपमद्यनिरूप्यते ॥
तृतीयवर्गाभ्रकेषुतृतीयाभ्रकतःक्रमात् । कारयेत्पट्टिकाभ्रकयंत्रम् शास्त्रविधानतः ॥

॥ तदुक्तं शौनकीये ॥

अथ तृतीयवर्गस्थाभ्रकनामाननुक्रमिष्यामो शारदपंकिलसोममार्जालिकरक्तमुखविनाशकाइति ॥ सोमेनैवेतदितिकेचित् ॥

॥ सोमाभ्रकलक्षणमुक्तं लोहतंत्रे ॥

मघवर्णोतिसूक्ष्मश्च सुदृढोरसपस्तथा । नेत्ररोगहरस्पर्शाद्देहे शीतळदोभवेत् ॥
अग्रगर्भोव्रणहरः मूत्रकृच्छ्रविनाशकृत् । सर्वत्ररक्तरेखाभिः सावर्तैः सुविराजितः ॥
तल्लक्षणसंयुक्तस्सोमाभ्रकइतीरितः । रसमाताबीजतैलादभ्रकम् शोधयेत्तद्विधा ॥१७७०॥
तस्तिद्वयमायामम् बाहुमात्रोन्नतंतथा । गालयित्वाभ्रकंपश्चात्पट्टिकांकारयेत्ततः ॥
आदौकुर्यात्कूर्मपीठंवारिवृक्षस्यदारुणा । षोडशांगुलविस्तीर्णंबाहुमात्रोन्नतंक्रमात् ॥
मध्येच्छंकुंपट्टिकाकारेण शास्त्रविधानतः । प्रदक्षिणावर्तकीलचक्राणितदनंतरम् ॥
शौंडीरमणियुक्तानितस्मिन्संधारयेत्ततः । तंत्रीन्संधारयेत्पश्चान्मूलकेंद्राद्यथाक्रमम् ॥
पट्टिकांतंविधिवत्कीलचक्रानुसारतः । पश्चाद्भागेदंतपात्रंस्थापयित्वाततःपरम् ॥१७७५॥
नालद्रावकंतस्मिन्संपूर्यरविचुंबकम् । पारदंचन्यसेत्पश्चात्तंत्रीनाहत्यशास्त्रतः ॥
तस्मिन्संधारेयित्वाथश्रृंगिण्याच्छाघनाळतः । तन्नाळमूलमाकाशेदृढंसंधारयेत्क्रमात् ॥



प्रदक्षिणावर्तकीलपंचचक्रैर्विराजितम् । पूर्वोक्ताभ्रकशंकुंतत्पीठमध्येदृढंयथा ॥
स्थापयित्वातस्यमूर्ध्निपट्टिकांद्रवशोधितां । संधारयेद्यथाशास्त्रंयानावरणमध्यमे ॥
यदासंध्यंतराज्ज्वालामुखशक्तिस्स्वभावतः । संभूयव्योमयानस्यमार्गांतंसंप्रसार्यते ॥१७८०॥
कीलींसंधारयेच्छंकुमूलकेंद्रेतदाबुधः । तेनतंत्रीमुखाच्छैत्यवेगःस्पंदनसंयुतः ॥
द्रवपात्रात्समुत्थायपंचचक्रमुखांतरात् । पूर्वोक्तपट्टिकामूलकेंद्रंप्रविशतिस्वयम् ॥
पश्चात्तन्मुखमासाद्य शक्तिज्वालामुखाभिधां । समाकृष्यातिवेगेन पट्टिकामूलकेंद्रतः ॥
प्रदक्षिणावर्तकीलमध्यस्थितमणौक्रमात् । संचोदयतिवेगेन तच्छक्तितदनंतरम् ॥
तन्मणिस्स्वीयवेगेनसमाकृष्यातिवेगतः । संपूरयेन्नाळमुखे तन्मूलात्खेलयंव्रजेत् ॥१७८५॥
तेनयानस्थयंतॄणां अपमृत्युविनाशनम् । भवेत्तस्मात्पट्टिकाभ्रकयंत्रम् यथाविधि ॥
यानावरेणमध्येसंस्थापयेदतिशीघ्रतः ॥ इत्यादि ॥
इत्येवमुक्त्वापट्टिकाभ्रकयंत्रम् यथाविधि । सूर्यशक्त्यपकर्षणयंत्रमद्यप्रकीर्त्यते ॥

॥ तदुक्तं क्रियासारे ॥

शरद्धेमंतयोश्शैत्यपरिहारायकेवलम् । सूर्यशक्त्यपकर्षणयंत्रंयानोपरिन्यसेत् ॥

॥ उक्तंहियंत्रसर्वस्वे ॥

शरद्धेमंतयोश्शैत्यनिवृत्त्यर्थंयथाविधि । सूर्यशक्त्यपकर्षणयंत्रमद्यनिरूप्यते ॥१७९०॥
सप्तविंशतिकादर्शात्सूर्यशक्त्यपकर्षकम् । यंत्रम् कुर्याद्यथाशास्त्रमन्यथानिष्फलंभवेत् ॥

॥ तदुक्तं दर्पणप्रकरणे ॥

स्फाटिकमंजुळफेनसुवर्चान्सैकतपारदगरदकिशोरान् । गंधककर्बुरप्राणक्षारान्रविशशिपंचमुखामरपंकान् ॥

रविवसुदिङ्नक्षत्रविभागान्वेदानलसागरवसुभागान् । सायकपादपभूतविभागान्वसुमुनिनिधिनेत्रविभागांशान् ॥

एतान्शुद्धान्चतुर्दशवस्तून्तत्तद्भागांशानुक्रमणात् । संपूर्यांतर्मुखमूषायांतच्छुकमुखव्यासटिकामध्ये ॥

संगाल्योष्णरसंपश्चात्संगृह्यांतर्मुखयंत्रबिले । शीघ्रंसंपूर्योक्तविधानात्कीलकचक्रं-
भ्रमयेद्वेगात् ॥१७९५॥

सूक्ष्मात्सूक्ष्मंमृदुळंशुद्धम् पिंगलवर्णंभारविहीनम् । भद्रंस्पर्शाच्छीतवितानम् मूलव्याधि-
विनाशकरंच ॥

प्रभवेद्रविशक्त्यपकर्षकदर्पणमेवंक्रियतेयदिसिद्धम् ॥ इत्यादि ॥

अशीत्यंगुलमायामम् विंशत्यंगुलविस्तृतम् । एकांगुलघनादेतद्दर्पणात्पट्टिकांदृढां ॥
कृत्वापश्चाद्यथाशास्त्रम् तस्मिन्केंद्रत्रयंक्रमात् । प्रकल्प्यविधिवन्नाळद्वयंबाहुसमं ततः ॥
दशांगुलास्यंतद्दर्पणतःकुर्याद्दृढंयथा । अर्धचंद्राकृतिंपीठम् नाळरूपमतःपरम् ॥१८००॥
रचयेद्वर्तुलंपश्चाच्चतुरश्रमथापिवा । वितस्तिद्वयमायामम् षड्वितस्त्युन्नतंतथा ॥
पीठांतरंचतेनैवकृत्वातस्मिन्नतःपरम् । अर्धचंद्राकृतिंनाळपीठंसंधारयेद्दृढम् ॥
पार्श्वयोरुभयोस्तस्यनाळद्वयमथक्रमात् । संधार्यमध्येष्टाशीत्यंगुलायामम् तथैवच ॥
अंगुलत्रयविस्तारम् शंकुमेकंदृढंन्यसेत् । पूर्वोक्तपट्टिकांतस्यशिरोभागेदृढंयथा ॥
स्थापयेद्विधिवत्पश्चात्तस्यकेंद्रत्रयेक्रमात् । तद्दर्पणकृतान्पद्मदळवद्दळसम्मितान् ॥१८०५॥
मध्येचषकसंयुक्तान्सच्छिद्रान्द्विमुखाकृतीन् । पद्माकारान्सुसंधार्यावर्तकीलकशंकुभिः ॥
बध्नीयात्सुदृढंपश्चाच्छैवालद्रावकंतथा । श्रुणिद्रवंचसंशुद्धंसप्रमाणंयथाविधि ॥
नाळद्वयेथसंपूर्यतस्मिन्छायामुखंमणिं । न्यसेत्तच्छंकुमूलेथज्योत्स्नाद्रावंन्यसेत्क्रमात् ॥
शैत्यापहारकान्तंत्रीन सकीलान्मंजुळावृतान् । ज्योत्स्नाद्रावकमध्येसंस्थापयेदथबंधयेत् ॥
तत्तंत्रीन्पार्श्वस्थनाळमध्यादाहृत्यशास्त्रतः । पट्टिकापार्श्वकमलकेंद्रयोरुभयोःक्रमात् ॥
संवेष्ट्यचपुनस्तत्केंद्राभ्यामाहृत्ययत्नतः । पट्टिकामध्यकमलमावेष्ट्याथपुनःक्रमात् ॥१८११॥
तत्पश्चाद्धागतस्तंत्रीन्समाहृत्ययथाविधि । शंकुमूलस्थितज्योत्स्नाद्रावकेसन्निवेशयेत् ॥
पश्चान्नाळांतरात्तत्पात्रमाच्छाद्यसमग्रतः । तन्नाळमूलंयानाधोभागेव्योम्निप्रकल्पयेत् ॥
यदाहेमंतशिशिरशैत्यव्याप्तिर्विमानके । दृश्यतेतत्क्षणादेवशंकुमूलस्थितंक्रमात् ॥
बृहच्चक्रमुखंकीलंभ्रामयेदतिवेगतः । पूर्वोक्तपट्टिकाकेंद्रस्थिततंत्रीप्रचालनम् ॥१८१५॥
भवेत्तेनातिवेगेनपार्श्वस्थकमलांतरात् । संभूयात्यंतचलनाद्वायुश्शैत्यंप्रकर्षति ॥
तच्छैत्यंपुनराहृत्यतद्वायुरतिवेगतः । पट्टिकामध्यकमलछषकेतंत्रिभिस्स्वयम् ॥



संयोजयतिवेगेनपश्चान्नाळद्वयांतरे । प्रविशेत्तच्छैत्यशक्तिःपश्चात्तन्नाळसंस्थितौ ॥
शैवालश्रुणिनामानौद्रावकावतिवेगतः । तच्छैत्यशक्तिमाहृत्यछायामुखमणौक्रमात् ॥
वेगेनसंयोजयतःपश्चादत्यंतवेगतः । तन्मणिस्स्वीयवेगेनतच्छक्तिंतंत्रिभिःक्रमात् ॥१८२०॥
शंकुमूलस्थितज्योत्स्नाद्रावकेसन्निवेशयेत् । द्रावकाद्व्योम्नितन्नाळात्तच्छक्तिर्लयमेधते ॥
पश्चात्तच्छैत्यसंबंधविषनाशो भवेद्ध्रुवम् । तेनयानप्रयातृणामत्यंतसुखदंभवेत् ॥
तस्मात्सर्वप्रयत्नेनसूर्यशक्त्यपकर्षकम् । यंत्रंसंस्थापयेद्यानोपरिशास्त्रविधानतः ॥ इत्यादि ॥
इत्युक्त्वाशास्त्रविधिनासूर्यशक्त्यपकर्षकम् । अपस्मारधूमप्रसारणयंत्रमतःपरम् ॥
संग्रहेणप्रवक्ष्यामियथाशास्त्रंयथामति ॥

॥ उक्तंहि क्रियासारे ॥

स्वकीयव्योमयानस्यविनाशार्थंयदाक्रमात् । परेषांव्योमयानाक्रमणंचप्रभवेद्यदि ॥१८२६॥
तन्निवारयितुंवेगात्संधिनाळमुखोत्तरे । यानस्यस्थापयेद्धीमान्यानतत्त्वविदांवरः ॥
अपस्मारेधूमप्रसारणयंत्रम् दृढंयथा ॥ इत्यादि ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

स्वयानरक्षणार्थायपरयानैर्यथाविधि । अपस्मारधूमप्रसारणयंत्रंप्रचक्षते ॥
क्षौंडीरलोहात्कर्तव्यमेतद्यंत्रंनचान्यथा । कृतंचेदन्यलोहेनस्वयानम् नाशमेधते ॥१८३०॥

॥ क्षौंडीरलोहमुक्तं लोहतंत्रे ॥

क्ष्विकाष्टकंपारदपंचकंच वीरत्रयंक्रौंचिकसप्तकंतथा । कांतत्रयम् हंसचतुष्टयंचमाध्वीक-
मेकंरुरुपंचकंक्रमात् ॥

एतान्विशुद्धान्वरमूषिकायां संपूर्यछत्रीमुखकुंडमध्ये । संस्थाप्यपश्चात्सुरसाख्यभस्त्रात्संगाल-
येत्कक्ष्यशतोष्णवेगात् ॥

पश्चात्समाहृत्यशनैश्शनैःक्रमात्संपूरयेद्यंत्रमुखेचतद्रसम् । एवंकृतेत्यंतमनोहरंदृढम्
क्षौंडीरलोहंप्रभवेद्विशुद्धम् ॥ इत्यादि ॥

पट्टिकायंत्रमध्येथक्षौंडीरंस्थाप्यवेगतः । कीलीसंचालनात्सम्यक्संताड्यत्रिशतोष्णतः ॥

सूक्ष्मात्सूक्ष्मतरांशुद्धाम् पट्टिकांकारयेदृढां । एतत्पट्टिकयाकुर्यात्पंचबाहून्नतंतथा ॥१८३५॥
बाहुत्रितयविस्तारम् भस्त्राकारम् यथाविधि । मुखनाळेनसंयोज्यषड्वितस्तिप्रमाणतः ॥
पेषिणीयंत्रवत्कार्यं तन्मुखंसुदृढंयथा । तन्मुखाच्छादनार्थायमुखावरणकीलकम् ॥
संधारयेत्ततस्तस्यमूलेकोशत्रयंक्रमात् । कल्पयित्वामध्यभागेसकीलंवर्तुलंमृदु ॥
शशचर्मसमायुक्तंकुर्यादावरणंततः । धूमपूरककीलींतन्मूलेसंधारयेदृढम् ॥
तदूर्ध्वेचूर्णपात्रंस्थापयेद्विधिवदृढम् । कीलीमुखंतत्पात्रकुक्षिमूलेनियोजयेत् ॥१८४०॥
एवंक्रमेणचत्वारिभस्त्रान्कुर्याद्यथाविधि । परयानावरणकालेयानावरकभस्त्रिकात् ॥
कृत्वाविमानावरणंपश्चात्तदुपरिक्रमात् । दिक्पीठोपरिपूर्वोक्तभस्त्रिकान्स्थाप्यसत्वरम् ॥
विद्युत्संयोजनंकुर्याच्चूर्णपात्रांतरेक्रमात् । तत्क्षणाद्धूमतांयातितच्चूर्णमतिवेगतः ॥
भस्त्रिकामुखमुद्घाट्यपश्चात्कीलींप्रचालयेत् । तेनप्रसारितोधूमोसूक्ष्मभस्त्रत्रयेक्रमात् ॥
प्रविश्यतन्मुखेभ्योथमध्यकुंडांतरेक्रमात् । प्रविश्यपूरणात्सर्वं व्याप्यपश्चाद्यथाक्रमम् ॥
भस्त्रिकामुखपर्यंतम् अतिवेगेनधावति । पश्चात्कीलकसंधानात्परयानोपरिक्रमात् ॥१८४६॥
एककालेचतुर्दिक्षुसर्वतोमुखतस्स्वयम् । व्याप्याथापस्मारधूमः परयानान्समग्रतः ॥
परेषांतत्क्षणात्स्वीयविषशक्तिप्रधानतः । करोत्यपस्मारवशान्सर्वान्शत्रून्नसंशयः ॥
तेनसर्वेविमानाग्रात्पतिष्यंत्यवनीतले । परयानविनाशंचस्वयानपरिपालनम् ॥
भवेत्तेनततस्सर्वेसुखंयांतिविमानगाः । तस्मादेतद्यंत्रवरम् विमानेस्थापयेत्सुधीः ॥ इत्यादि ॥
इत्युक्त्वापस्मारधूमयंत्रम् शास्त्रविधानतः । इदानींस्तंभनयंत्रम् यथाविधिनिरूप्यते ॥

॥ उक्तंहि क्रियासारे ॥

यदातुवारिपरिधिरेखामंडलसंधिषु । शक्त्युद्रेकोयदिभवेन्महाविषसमाकुलः ॥
प्रचंडमारुतोद्रेकोभवेदत्यंतदारुणः । तत्तत्संधिषुवातानांपश्चाद्युद्धंभविष्यति ॥
तेनाकाशेभवेद्वातप्रवाहस्सर्वतोमुखः । तत्संपर्काद्याननाशस्तत्क्षणात्संभविष्यति ॥
तस्मात्तत्परिहाराययानाधोभागकेंद्रके । संस्थापयेत्स्तंभनाख्ययंत्रंशास्त्रविधानतः ॥इत्यादि॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

वातप्रवाहसंसर्गपरिहारायकेवलम् । विमानस्तंभनयंत्रंयथामतिनिरूप्यते ॥१८५६॥



चतुरश्रंवर्तुलंवावक्रतुंडाख्यलोहतः । विमानपीठप्रमाणेचतुर्थांशप्रमाणतः ॥
घनेवितस्तित्रितयंपीठमन्यत्प्रकल्पयेत् । ईशान्यादिक्रमात्तस्मिन्नष्टदिक्षुयथाक्रमम् ॥
केंद्राणिविधिवत्कुर्यात्सच्छिद्रावरणंयथा । आवर्तदंतसंयुक्तचक्राणिविधिवत्क्रमात् ॥
अनुलोमविलोमैश्चकुर्यात्तेनैवलोहतः । आवर्तकीलसंयुक्तान्चक्रदंडान्यथाविधि ॥१८६०॥
त्रिवृत्करणतोलोहरज्जून्छिद्रानुसारतः । कुर्यात्तेनैवलोहेनशंकुकीलादयःक्रमात् ॥
अंतश्चक्रयुतान्नाळस्तंभान्तंत्रीसमाकुलान् । इशान्यादिक्रमात्केंद्रस्थानेषुस्थापयेत्क्रमात् ॥
विमानांगोपसंहारस्थाननाळमुखांतरात् । सकीलतंत्रीनाहृत्यनाळस्तंभांतरात्पुनः ॥
अंतर्नाळैस्समाकृष्यमध्यकेंद्रावधिक्रमात् । पीठमध्यावर्तकीलस्तंभमूलांतरेक्रमात् ॥
तच्छिद्रमुखेकीलशंकुभिर्बंधयेत्दृढम् । आवर्तकीलस्तंभंतु पीठमध्येनिवेशयेत् ॥१८६५॥
पूर्वोक्तवातप्रवाहो यदासंदृश्यतेक्रमात् । तदायानांगोपसंहारककीलंप्रचालयेत् ॥
तेनयानस्संकुचितो भवेत्पश्चात्तथैवहि । पश्चादष्टांगकीलकचक्राणिभ्रामयेत्दृढम् ॥
तेनवेगोपसंहारो विमानस्यभवेत्क्रमात् । पश्चात्पीठस्थाष्टनाळस्तंभकीलान्प्रचालयेत् ॥
विमानवेगसर्वस्वम् तेनसंशांतिमेधते । पीठमध्यस्थितदंढकीलकंतदनंतरम् ॥
भ्रामयेदतिवेगेनतेनस्तंभो दृडीभवेत् । स्तंभप्रतिष्ठायानांतःपीठेयदिभवेदृढम् ॥१८७०॥
तत्क्षणादेवयानस्यस्तंभनंप्रभवेदृढम् । पक्षाघातककीलंच भ्रामयेत्तदनंतरम् ॥
वायूत्पत्तिर्भवेत्तेन तद्वातस्सर्वतोमुखात् । विमानमूलमावृत्यमंडलाकारतस्स्वयम् ॥
विमानंधारयेत्पश्चाद्विद्युत्स्थानाद्यथाविधि । पृथिव्यंतश्शक्तिनाळशलाकंकीलचालनात् ॥
स्थापयेत्सुदृढंतेनयानस्त्वचलतांव्रजेत् । तस्माद्वातप्रवाहेणयानसंरक्षणंभवेत् ॥
अतस्सर्वप्रयत्नेनयानाधोभागकेंद्रके । यानस्तंभनयंत्रम् च स्थापयेत्सुदृढंयथा ॥ इत्यादि ॥
एवमुक्त्वास्तंभनाख्ययंत्रम् शास्त्रानुसारतः । वैश्वानरनाळयंत्रमिदानींसंप्रचक्षते ॥

॥ उक्तंहि क्रियासारे ॥

खेटयानप्रयातॄणामग्निहोत्रार्थमादरात् । पाकार्थंचविशेषेण अग्निरावश्यकोभवेत् ॥
तस्मात्पावकदानार्थं यानस्याभिमुखांतरे । वैश्वानरनाळयंत्रमपिसंस्थापयेद्बुधः ॥

॥ तदुक्तं यंत्रसर्वस्वे ॥

खेटयानप्रयातॄणामग्निसिध्यर्थमेवहि । वैश्वानरनाळयंत्रमिदानीं संप्रचक्षते ॥
वितस्तिद्वयमायामम् द्वादशांगुलविस्तृतम् । चतुरश्रंवर्तुलंवानागलोहेनशास्त्रतः ॥१८८०॥

पीठंकृत्वाततस्तस्मिन्कुर्यात्केंद्रत्रयंक्रमात । ताम्रखर्परसंमिश्रलोहात्पात्राणिकारयेत् ॥
गंधकद्रावकम् शुद्धमेकपात्रेप्रपूरयेत् । रूक्षाकद्रावमेकस्मिन्पात्रे तद्वन्नियोजयेत् ॥
मांजिष्ठिकाद्रावकंचन्यसेत्पात्रान्तरेतथा । एतानिद्रवपात्राणि पीठकेंद्रेषुस्थापयेत् ॥
मणिप्रज्वलकंनामगंधकद्रावकेन्यसेत् । तथैवधूमास्यमणिंरूक्षाकद्रावकेततः ॥
मांजिष्ठिकाद्रावकेतुमहोष्णिकमणिंन्यसेत । विमानेपाकशालाश्रयत्रयत्राग्निहोत्रिणः ॥१८८५॥
स्थापयेत्कीलकस्तंभान् तत्रतत्रदृढंयथा । द्रवपात्रांतरेतंत्रीन् भद्रमुष्ट्याख्यकीलके ॥
त्रिसंख्याकान्प्रबध्नीयाद्यथाशास्त्रमतःपरम् । मूलस्तंभंसमारभ्यद्रवपात्रांतमेवहि ॥
तंत्रीत्रयंसमाहृत्यमण्यग्रेयोजयेत्क्रमात् । स्तंभाग्रेचुंबकीकीलमध्येज्वालामुखीमणिं ॥
काचावरणतस्स्थाप्यपश्चात्तत्पार्श्वयोःक्रमात् । सिंजीरकमणिंतद्वत्दृढिकाख्यमणिंक्रमात् ॥
संधार्यपश्चादेकैकमणिमूलाद्यथाविधि । एकैकतंत्रीमाहृत्यमध्यस्तंभाग्रकीलकात् ॥१८९०॥
स्तंभमूलेग्रंथिकीलमुखांतम् सन्नियोजयेत् । तदारभ्ययथाशास्त्रम् छुल्लिकांतम् तथैवहि ॥
अग्निहोत्रस्यकुंडाग्रावधि यानेऋजुर्यथा । वर्तुलंकुल्यवत्कृत्वालोहनाळान्ततःपरम् ॥
तस्मिन्संधायविधिवत्पश्चात्तंत्रीन्यथाक्रमम । तत्तन्नाळेषुसंयोज्य छुल्लिकासुतथैवहि ॥
अग्निहोत्रस्यकुंडेषु समाहृत्ययथाविधि । तत्रत्यखर्परकृतपट्टिकासुन्यसेत्दृढम् ॥
आदौसंभ्रामयेद्भद्रमुष्टिकीलकमद्भुतम् । द्रवपात्रस्थितद्रावकोत्यंतोष्णत्वमाप्नयात् ॥१८९५॥
रूक्षणद्रावकसंजातोष्णोमांजिष्ठिकामणौ । संव्याप्यधूमंजनयेन्महोष्णिकमणौतथा ॥
तद्द्रावकोष्णवेगेन महोष्णस्संप्रजायते । पश्चाद्गंधकद्रावस्थमणौप्रज्वलिकाभिधे ॥
ज्वालोत्पत्तिर्भवेत्तद्द्रावकोष्णव्याप्तितस्तथा । धूमोष्णज्वालकाःपश्चात्तत्तत्तंत्रीमुखात्स्वतः ॥
सिंजीरदृढिकाज्वालामुखीमणिषुवेगतः । व्याप्नुवंतिततश्चुंबकीकीलंचयथाविधि ॥
भ्रामयेदतिवेगेनपश्चाद्धूमोष्णज्वालकाः । तंत्रीमुखात्स्वभावेनमध्यस्तंभाग्रकीलकम् ॥१९००॥
व्याप्नुवंत्यतिवेगेनतत्कीलंभ्रामयेत्ततः । स्तंभमूलग्रंथिकीलीं तद्वेगात्संविशंतिहि ॥
तत्कीलभ्रमणादेवचुल्लिकापट्टिकांतरे । धूमोष्णज्वालविशिखाःप्रविशंतियथाक्रमम् ॥
तथाग्निहोत्रकुडस्थपट्टिकास्वपिवेगतः । पश्चाद्वैश्वानरोत्पत्तिस्तत्रतत्रभवेद्ध्रुवम् ॥
तस्मात्सर्वप्रयत्नेन याननाभिमुखेक्रमात् । वैश्वानरनाळयंत्रमपिसंस्थापयेत्सुधीः ॥ इत्यादि ॥
एवमुक्त्वांगयंत्राणि इदानींशास्त्रतःक्रमात् । व्योमयानंप्रवक्ष्यामिसंग्रहेणयथामति ॥१९०५॥

इति महर्षिभरद्वाज प्रणीत वैमानिकप्रकरणे द्वितीयोऽध्यायः ॥

॥ श्रीरस्तु ॥

# ॥ अथ तृतीयोऽध्यायः ॥

## जात्यधिकरणम्

सू. १. ॥ जातित्रैविध्यं-युगभेदाद्विमानानां ॥

बोधानन्द वृत्तिः—

एवमुक्त्वाविमानांगयंत्राणिविधिवत्क्रमात । अथेदानींव्योमयानस्वरूपंजातितोच्यते ॥
विमानजातिभेदप्रबोधकानियथाक्रमम् । पदानित्रीणिसूत्रेस्मिन्वर्णितानिस्फुटंयथा ॥
तत्रादिमपदाद्यानजातिभेदोनिरूपितः । तेषांसंख्याविभागस्तुद्वितीयपदतःस्मृतः ॥
जातिसंख्याविभागेनपुष्पकाद्यायथाक्रमम् । तृतीयपदतस्सम्यग्विमानाःपरिकीर्तिताः ॥
एवंसामान्यतःसूत्रपदार्थस्संप्रकीर्तितः । इदानींतद्विशेषार्थस्सम्यगत्रविविच्यते ॥१९१०॥
यतश्चतुष्पाद्धर्मोभूत्कृतेसर्वजनास्ततः । योगमंत्राद्यनुष्ठानंविनाधर्मप्रभावतः ॥
अभूवन्सिद्धपुरुषास्सात्विकाज्ञानवित्तमाः । आकाशगमनंतेषांवायुवेगादयस्तथा ॥
अणिमाद्यास्सिद्धयोष्टौस्वतस्सिद्धाबभूवतुः । तस्मात्कृतयुगेव्योमयानानित्रिविधान्यपि ॥
नासन्निितिवप्रवक्ष्यंतियानतत्वार्थपारगाः । त्रेतायामेकोनपादोधर्मोभूत्कालभेदतः ॥
त्रिपाद्धर्मप्रचारत्वात्सर्वेषां प्राणिनांक्रमात् । बुद्धिमांद्यमभूत्तेन वेदतत्वार्थनिर्णयः ॥१९१५॥
अणिमाद्यास्सिद्धयोष्टावपिमालिन्यतांगताः । तस्मादाकाशगमनवायुवेगादिषुक्रमात् ॥
शक्तिर्नाभूत्स्वभावेनधर्मविप्लवहेतुतः । एतद्विज्ञायभगवान्महादेवोमहेश्वरः ॥
सर्ववेदार्थविज्ञानप्रदानार्थंद्विजन्मनाम् । अवातरत्स्वयंसाक्षाद्दक्षिणामूर्तिरूपतः ॥
सनकादिमुनीन्पश्चान्निमित्तीकृत्यहर्षतः । मंत्रद्रष्टृत्वसिध्यर्थम् वेदमंत्रान्यथाविधि ॥
विभज्यानुष्ठानकल्पप्रभेदानकरोद्विभुः । पश्चान्मुनीन्समालोक्यगुरुश्चाक्षुषदीक्षया ॥१९२०॥
मंत्रानुष्ठानकल्पादीनुपदेशंचकारहि । पश्चात्तन्मंत्रद्रष्टृत्वसिध्यर्थंजगदीश्वरः ॥
अत्यंतकृपयासर्वानालिंग्यमुनिपुंगवान् । प्रविश्यहृदयंतेषांज्ञप्तिरूपमनीनयत् ॥

ततस्तेमुनयस्सर्वेपुलकांकितविग्रहाः । तदनुग्रहसंलब्धज्ञप्तिमाश्रित्यकेवलम् ॥

गद्गदस्वरतोभक्त्यात्रिलोकीगुरुमव्ययम् । शतरुद्रीयमंत्राद्यैस्तुष्टुवुर्हर्षमाश्रिताः ॥

ततःप्रसन्नोभगवान्दक्षिणामूर्तिरव्ययः । मंत्रस्वरूपद्रष्टृत्वेतद्रहस्यप्रबोधने ॥१९२५॥

अनुभूतिंददौतेषांज्ञप्तिपूर्वकमद्भुतम् । पुनस्समालोक्यमुनीन्प्रहसन्परमेश्वरः ॥

उवाचपरमानंदरसपूरितवाक्यतः । एतावंतमभूत्कालम् युष्माकम् मुनिनामतः ॥

इदानींमत्प्रभावेन मंत्रद्रष्टृत्वकारणात् । स्वतोमद्भावमाश्रित्य ऋषयोभवतस्वयम ॥

इत्युक्त्वा तान्पुनःप्राहसद्गुरुःकरुणानिधिः । भोभोमहर्षयस्सर्ववेदमंत्रान्यथाविधि ॥

मदनुग्रहसंलब्धकल्पानुष्ठानमार्गतः । अनुष्ठाययथाशास्त्रम् ब्रह्मचर्यंसमाश्रिताः ॥१९३०॥

ईशाज्ञारूपिणींचित्प्रबोधरूपांमहेश्वरीं । समाराध्यैकाक्षरेण शांकरींवेदमातरम् ॥

तदनुग्रहमासाद्यज्ञात्वामंत्ररहस्यकान् । तदधिष्ठानरूपस्यमहादेवस्यकेवलम् ॥

विज्ञायहृदयंभक्त्यासमाधिबलतस्तथा । ईश्वरानुग्रहात्तद्वन्मदनुग्रहतःक्रमात् ॥

प्रज्ञानघनमाविश्यप्रज्ञानेत्रेणकेवलम् । सर्ववेदार्थतात्पर्यरहस्यंस्वानुभूतितः ॥

अनुभूयविचार्याथप्रसन्नेंद्रियमानसाः । धर्मशास्त्रपुराणेतिहासादींश्चततःपरम् ॥१९३५॥

भूतभौतिकशास्त्राणिवेदतत्वानुसारतः । सर्वलोकोपकाराय कल्पयित्वाययथाक्रमम् ॥

संस्थापयतलोकेस्मिन्सर्वेषांभुक्तिमुक्तये । आकाशगमनार्थंव्योमयानानितथैवच ॥

वायुवेगादिसिध्यर्थं घुटिकापादुकाविधिं । रचयित्वाकल्पशास्त्रैर्लोकेस्थापयतक्रमात् ॥

इत्यादिदेशभगवान्दक्षिणामूर्तिरव्ययः । ततस्तेमुनयस्सर्वेदक्षिणामूर्तिरूपिणम् ॥

हृदिकृत्वामहादेवंसद्गुरुंकरुणालयम् । धर्मशास्त्रपुराणेतिहासादीन्वेदमार्गतः ॥१९४०॥

तथैवभौतिकादीनि शास्त्राणि विविधान्यपि । कल्पशास्त्राणि सर्वाणि श्रौतस्मार्तपराणिच ॥

चक्रुर्वेदहृदयमनुसृत्ययथाविधि । पश्चात्प्रतिष्ठां चक्रुर्लोकेतानियथाक्रमम् ॥

तेष्वंतरिक्षविमान बोधकानियथाविधि । षट्शास्त्राणीतिकीर्त्यंतेपूर्वाचार्यकृतानिहि ॥

मांत्रिकास्तांत्रिकास्तद्वत्कृतकाइतिचक्रमात् । तेषुसम्यङ्निरूप्यान्तेविमानास्सर्वतोमुखाः ॥

॥ उक्तंहि विमानचंद्रिकायां ॥

व्योमयानप्रभेदानिप्रवक्ष्याम्यद्यशास्त्रतः । मंत्रप्रभावस्याधिक्यात्त्रेतायांकेवलंनृणां ॥१९४५॥



विमानाअपिमंत्रप्रभावादेवविनिर्मिताः । तस्माद्विमानाश्शास्त्रेणमांत्रिकाइतिवर्णिताः ॥

तंत्रप्रभावाधिक्यत्वाद्द्वापरेसर्वदेहिनां । तंत्रप्रभावादेवसर्वे विमानास्संप्रकल्पिताः ॥

विमानाद्वापरेतस्मात्तांत्रिकाइतिवर्णिताः । मंत्रतंत्रविहीनत्वाद्विमानाःकृतकाइति ॥

प्रोक्ताःकलियुगेव्योमयानशास्त्रविशारदैः । त्रैविध्यंव्योमयानानां धर्मव्यत्ययकारणात् ॥

पूर्वाचार्यैर्विशेषेण शास्त्रेष्वेवंप्रकीर्तितम् ॥ इत्यादि ॥

॥ व्योमयानतंत्रेपि ॥

मंत्रप्रभावात्त्रेतायां विमानामांत्रिका इति । द्वापरे तंत्रप्राधान्याद्विमानास्तांत्रिकाःस्मृताः ॥

मंत्रतंत्रविहीनत्वात्तिष्येतुकृतका इति । त्रैविध्यंव्योमयानानांस्वंजात्यनुसारतः ॥

उक्तंशास्त्रेषुसर्वत्रपूर्वाचार्यमतंयथा ॥ इति ॥

॥ यंत्रकल्पेपि ॥

जातिभेदोविमानानांमांत्रिकादिप्रभेदतः । युगशक्त्यनुसारेणप्रोक्तंयानविदांवरैः ॥ इत्यादि ॥

मांत्रिकस्तांत्रिकश्चैवकृतकश्चेतिशास्त्रतः । जातिभेदास्त्रिधाप्रोक्ताविमानानांबुधैःक्रमादिति ॥

यानविंदौ ॥१९५५॥

युगभेदाज्जातिभेदोविमानानांमहर्षिभिः । मांत्रिकादिप्रभेदेनत्रिधाशास्त्रेषुवर्णितम् ॥

॥ इतिखेटयानप्रदीपिकायां ॥

त्रैविध्यंव्योमयानानां युगभेदानुसारतः । उक्तंहिशास्त्रतस्सम्यग्यानशास्त्रविदांवरैः ॥

॥ इतिव्योमयानार्कप्रकाशिकायां ॥

एवंशास्त्रानुसारेणसूत्रेस्मिन्जातिभेदतः । त्रैविध्यंव्योमयानानां उक्तंसम्यग्यथाविधि ॥

इत्यादि ॥

सू. २ ॥ पंचविंशन्मांत्रिकाः पुष्पकादिप्रभेदेन ॥

**बोधानन्द वृत्तिः—**

पूर्वसूत्रेविमानानां त्रैविध्यंजातिभेदतः । युगरूपानुसारेणवर्णितंसप्रमाणतः ॥

मांत्रिकाइतियेप्रोक्ताविमानास्तेषुशास्त्रतः । पुष्पकादिप्रभेदेनतेषांसंख्याविनिर्णयः ॥१९६०॥

विशदीक्रियतेसम्यक्सूत्रेस्मिन्शास्त्रामानतः । पदानित्रीणिशास्त्रेस्मिन्यानसंख्याविनिर्णये ॥
तत्रादिमपदाद्यानसंख्यासम्यक्प्रदर्शिता । द्वितीयपदतोव्योमयानजातिर्निरूपिता ॥
तृतीयपदतस्तेषां नामभेदानिरूपिताः । एवंसूत्रस्थपदानां सामान्यार्थोनिरूपितः ॥
इदानींसप्रमाणेनविशेषार्थोविविच्यते । येतुमंत्रप्रभावेनव्योम्निसंचरंतिस्वयम् ॥
तेष्वेकैकविमानस्यपुष्पकादिप्रभेदतः । पंचविंशतिनामानि शौनकीयेयथाक्रमम ॥१९६५॥
निरूपितानितान्येवक्रमादत्रप्रचक्षते ॥

॥ तत्रतावच्छौनकंसूत्रं ॥

अथविमानेषुत्रेतायांपंचविंशतिःतेमांत्रिकास्तेषांनामान्यनुक्रमिष्यामः ॥ पुष्पकाजमुखभ्राजस्वय्ज्योतिर्मुखकौशिकभीष्मशेषवज्रांगदैवतोज्वलकोलाहलार्चिष भूष्णुसोमांकपंचवर्णषण्मुखपंचबाणमयूर शंकरत्रिपुरवसुहारपंचाननांबरीषत्रिणेत्रभेरुंडाइति ॥

॥ माणिभद्रकारिका ॥

त्रेतायुगविमानास्युर्द्वात्रिंशन्मांत्रिकाइति । गौतमोक्तानिनामानि तेषामत्रयथाक्रमम ॥
विविच्यंतेसमालोड्यमूलसूत्रंयथामति । पुष्पकोजमुखोभ्राजस्स्वयंज्योतिश्चकौशिकः ॥
भीष्मकश्शेषवज्रांगो दैवतोज्वलएवच । कोलाहलोर्चिषोभूष्णुस्सोमांकोवर्णपंचकः ॥
षण्मुखःपंचबाणश्चमयूरोशंकरप्रियः । त्रिपुरोवसुहारश्च पंचाननोंबरीषकः ॥१९७०॥
त्रिणेत्रोभेरुंडइतिमांत्रिकाणांयथाक्रमम् । एतान्युक्तानिनामानिपंचविंशन्महर्षिणा ॥इत्यादि॥

॥ विमाननामानि ॥

१. पुष्पक विमान
२. अजमुख „
३. भ्राज „
४. स्वयंज्योति „
५. कौशिक „
६. भीष्मक विमान
७. शेष „
८. वज्रांग „
९. दैवत „
१०. उज्वल „
११. अर्चिष विमान
१२. कोलाहल „
१३. भूष्णु „
१४. सोमांक „
१५. वर्णपंचक „



१६. षण्मुख विमान
१७. पंचबाण „
१८. मयूर „
१९. शंकरप्रिय „
२०. त्रिपुर विमान
२१. वसुहार „
२२. पंचानन „
२३. अंबरीष विमान
२४. त्रिणेत्र „
२५. भेरुंड „

सू. ३ ॥ भैरवादिभेदात्तांत्रिकाष्षट्पंचाशत् ॥

बोधानन्द वृत्तिः—

पूर्वसूत्रेमांत्रिकाणां नामसंख्यादिनिर्णयः । कृतंयथातांत्रिकव्योमयानानांतथैवहि ॥
नामसंख्यानिर्णयार्थमिदंसूत्रंप्रकीर्तितम । तांत्रिकाणांनामसंख्याबोधकानिपृथक्पृथक् ॥
पदानित्रीणिसूत्रेस्मिन्वर्णितानियथाक्रमम् । तत्रादिमपदाद्याननामभेदोनिरूपितः ॥
द्वितीयपदतस्तेषां जातिभेदःप्रदर्शितः । तृतीयपदतस्संख्या निर्णयस्समुदीरितः ॥१९७५॥
एवंसामान्यतस्सूत्रपदार्थःपरिकीर्तितः । इदानींतद्विशेषार्थस्संग्रहेणनिरूप्यते ॥
आकारगतिवेगाद्यामांत्रतांत्रिकयोःक्रमात । समानाइतिवर्ण्यंतेयानशास्त्रविदांवरैः ॥
तथापितांत्रिकेष्वेकप्रभेदःपरिकीर्त्यते । द्यावापृथिव्योस्संधिस्थशक्तिसम्मेळनक्रमः ॥
एकः प्रभेद इत्याहुस्तांत्रिकेषुमनीषिणः ॥

॥ लल्लोपि ॥

एकएवप्रभेदस्स्यान्मांत्रिकादपितांत्रिके । द्यावापृथिव्योर्यच्छक्तिस्तस्यास्सम्मेळनक्रमः ॥
आकारगतिवैचित्र्यादिषुसर्वत्रहिक्रमात् । एतद्विनासमानत्वमुभयोरपिवर्णितम् ॥१९८१॥
तांत्रिकाणांप्रभेदस्तु षट्पंचाशदितिक्रमात । सूत्रेयदुक्तम् तच्छौनकोक्तरीत्यानिरूप्यते ॥

॥ तत्रतावच्छौनकंसूत्रम ॥

द्वापरेतांत्रिकाषट्पंचाशत्तेषांनामान्यनुक्रमिष्यामः भैरव नंदक वटुक विरिंच तुंबर वैनतेय भेरुंड मकरध्वज शृंगाटकांबरीष शेषास्य सैंहिक मातृक भ्राज पैंगळ टिट्टिभ प्रमथ भूर्ष्णि चंपक द्रौणिक रुक्मपुंख भ्रामणि ककुभ कालभैरव जंबुक गिरीश गरुडास्य गजास्य

वसुदेव शूरसेन वीरबाहु बृसुंड गंधक शुकतुंड कुमुद क्रौंचिक अजगर पंचदळ चुंबक दुंदु-
भिरंबरास्य मायूरक भीरु नळिक कामपाल गंडर्क्ष पारियात्र शकुंत रविमंडन व्याघ्रमुख
विष्णुरथसौवर्णिक मृड दंभोळि बृहत्कुंज महानट इति ॥

॥ माणिभद्रकारिका ॥

षट्पंचाशदितिप्रोक्तास्तांत्रिकाद्वापरेयुगे । तेषांनामानिविधिवद्गौतमोक्तप्रकारतः ॥
निरूप्यंतेत्रविधिवद्यथाशास्त्रंसमासतः । भैरवोनंदकस्तद्वत् वटुकोथविरिंचिकः ॥
तुंवरोवैनतेयश्च भेरुंडो मकरध्वजः । शृंगाटकोंबरीषश्च शेषास्यःसैंहिकस्तथा ॥१९८५॥
मातृकोभ्राजकश्चैवपैंगळो टिट्टिभस्ततः । प्रमथोभूर्णिकस्तद्वच्चंपको द्रौणिकस्तथा ॥
रुक्मपुंखोभ्रामणिकः ककुभःकालभैरवः । जंबुकाख्योगिरीशश्च गरुडास्योगजास्यकः ॥
वसुदेवश्शूरसेनो वीरबाहुर्भृसुंडकः । गंडकोशुकतुंडश्चकुमुदःक्रौंचिकस्ततः ॥
अजगरःपंचदळःचुंबको दुंदुभिस्तथा । अंबरास्योमयूरश्च भीरुश्चनळिकाह्वयः ॥
कामपालोथगंडर्क्षः पारियात्रश्शकुंतकः । रविमंडनोव्याघ्रमुखःपश्चाद्विष्णुरथस्तथा ॥१९९०॥
सौवर्णिकोमृडश्चैवदंभोळ्याख्यस्तथैवच । बृहत्कुंजविमानश्चमहानटइतिक्रमात् ॥
एतेषट्पंचाशतिकास्तांत्रिकाइतिद्वापरे ॥ इति ॥

सू. ४ ॥ शकुनाद्याः पंचविंशतिःकृतकाः ॥

बोधानन्द वृत्तिः—

एवमुक्त्वातांत्रिकाणां नामभेदादिनिर्णयः । कृतकानांनामभेदनिर्णयार्थंतथैवहि ॥
क्रमेण शास्त्रतस्सम्यक्सूत्रोयंपरिकीर्तितः । कृतकानां नामसंख्याबोधकानिपृथक्पृथक् ॥
पदानित्रीणिसूत्रेस्मिन्वर्णितानियथाक्रमम् । तत्रादिमपदाद्याननामभेदोनिरूपितः ॥१९९५॥
तेषांसंख्याविभागस्तु द्वितीयपदतःस्मृतः । तृतीयपदतस्तद्वज्जातिभेदःप्रकीर्तितः ॥
एवंसामान्यतस्सूत्रपदार्थस्सन्निरूपितः । इदानींतद्विशेषार्थस्संग्रहेण विविच्यते ॥
आकारगतिवैचित्र्यादिषुशास्त्रान्महर्षिभिः । समानमितिहिप्रोक्तंमंत्रतंत्रादिकंविना ॥
कृतकानांप्रभेदस्तुपंचविंशदितिक्रमात् । सूत्रेनिरूपितंयत्तच्छौनकोक्तप्रकारतः ॥
समालोड्यविशेषेण यथामतिनिरूप्यते ॥



(31)

॥ तत्र तावच्छौनकंसूत्रम् ॥

अथ तिष्ये कृतकभेदाः पंचविग्ंशति स्तेषांनामान्यनुक्रमिष्यामः ॥

सू.॥ शकुनसुंदररुक्ममंडलवक्रतुंडभद्रकरुचक वैराजभास्करगजावर्तपौष्कलविरंचि-
नंदककुमुदमंदर हंसशुकास्यसोमकक्रौंचकपद्मकसैंहिकपंचबाणऔर्यायणपुष्करकोदंडा इति ॥

॥ माणिभद्रकारिका ॥

पंचविंशदितिप्रोक्ताः कृतकास्तुकलौयुगे । तेषांनामानि विधिवद्गौतमोक्तविधानतः ॥
विविच्यंतेत्रविधिवत्संग्रहेणयथाक्रमम । शकुनोसुंदरश्चैवरुक्मकोमंडलस्तथा ॥
वक्रतुंडोभद्रकश्चरुचकश्चविराजकः । भास्करश्चगजावर्तःपौष्कलोथविरंचिकः ॥
नंदकःकुमुदस्तद्वन्मंदरो हंसएवच । शुकास्यसौम्यकश्चैवक्रौंचकोपद्मकस्ततः ॥
सैंहिकःपंचबाणश्च और्यायणस्तथैवहि । पुष्करःकोदंडइतिकृतकाःपंचविंशतिरिति ॥२००५॥

सू. ५ ॥ राजलोहादेतेषामाकाररचना ॥

बोधानन्द वृत्तिः—

एवमुक्त्वाकृतकयानप्रभेदान्शास्त्रतःक्रमात् । शकुनादिविमानानामाकाररचनादयः ॥
अथेदानींराजलोहादेवेत्यस्मिन्निरूप्यते ॥

॥ तदुक्तं क्रियासारे ॥

कृतकव्योमयानानामाकाररचनाविधौ । उक्तेषुसर्वलोहेषूष्मपारसुप्रशस्तकाः ॥
तेषुराजाख्यलोहोत्रशकुनस्यप्रशस्तकः ॥

॥ तदुक्तं लोहप्रकरणे ॥

सोमसौंडालमार्द्वीकलोहवर्गत्रयेक्रमात । त्र्यष्टद्विलोहभागांशान्टंकणेनसमन्वितान् ॥
मूषायांपूरयित्वाग्नौन्यसेद्व्यासटिकांतरे । द्वासप्तत्युत्तरद्विशतकक्ष्योष्णप्रमाणतः ॥२०११॥
संगालयेत्ततोराजलोहोभवतिनान्यथा ॥ इत्यादि ॥

॥ विश्वंभरोपि ॥

लोहाधिकरणे सम्यग्विमानरचनाविधौ । ऊष्मपाषोडशप्रोक्ताः श्रेष्ठाच्छ्रेष्ठतरा इति ॥
चतुर्थलोहस्तेषुराजाख्यलोह इतीरितः । तनैवकुर्याच्छकुन विमान मिति वर्णितः ॥इत्यादि॥
आदौपीठस्ततोनाळस्तंभःपश्चाद्यथाक्रमं । त्रिचक्रकीलकान्यस्य सरंध्राणि ततः परं ॥
चतुर्गोष्मकयंत्रारचवातनाळास्तथैवहि । ततोजलावरणनाळस्तैलपात्रमतः परं ॥
वातपाचकतंत्रीनाळोथ चुल्लीतथैवच । विद्युद्यंत्रश्चाथ वातचोदनयन्त्र एवच ॥
तथैववातपायन्त्रो दिक्प्रदर्शध्वजस्तथा । पश्चात् शकुनयन्त्रश्च तत्पक्षद्वयमेवच ॥
विमानोत्क्षेपणार्थं तत्पुच्छभागस्तथैवहि । ततोविमानसन्चारकारणौष्म्यकयन्त्रकः ॥
किरणाकर्षणमणिरित्यष्टाविंशतिःक्रमात । अंगान्युक्तानि शकुनविमानस्ययथाक्रमं ॥

॥ अथयानरचनाविधिरुच्यते ॥

पट्टिकायंत्रतो लोहंसमीकृत्ययथाविधि । चतुरश्रंवर्तुलंवा डोलाकारमथापिवा ॥
विमानाकारभारस्तु भारवाणांशतंयदि । कुर्यात्पीठंविमानस्यतदर्धेनयथाविधि ॥
यानमानानुसारेण पीठमेवंप्रकल्पयेत् । तन्मध्येस्थापयेन्नाळस्तंभमावर्तकीलकैः ॥

॥ नाळस्तंभलक्षणं लल्लेनोक्तं ॥

लल्लेनोक्तं यथाशास्त्रेयन्त्रकल्पतरौक्रमात् । तदेवात्रप्रवक्ष्यामि नाळस्तंभस्य लक्षणं ॥
हाटकास्येन लोहेननाळस्तंभंप्रकल्पयेत् । नकुर्यादन्यलोहेनकृतश्चेन्नाशमेधते ॥

॥ हाटकास्य लोहमुक्तं लोहतन्त्रे ॥

सुवर्चलस्याष्टभागान् लघुक्षिवकस्यषोडश । लघुबंभारिकस्याष्टादशभागान्त्रवेस्तथा ॥
शतभागान्सुसंयोज्य मूषायांसन्निवेश्यच । कूर्मव्यासटिकामध्ये संस्थाप्यसुदृढं यथा ॥
सप्तोत्तरत्रिशतकक्ष्यप्रमाणेन वेगतः । महोर्मिभस्त्रिकात्सम्यक्तन्नेत्रोन्मीलनावधि ॥
गाल्रयेद्विधिवत्पश्चाध्हाटकास्यंभविष्यति ॥ इत्यादि ॥

॥ पीठनिर्णयः ॥

पीठौन्नत्यंवितस्तीनां अशीतिरितिवर्णितं । षट्पंचाशद्वितस्तीनामायामं च तथैवहि ॥



वितस्तिसप्तत्यौन्नत्यम् दक्षिणोत्तरभागयोः । ह्रस्वोभूत्वांत्यभागे तु त्रिकोणाकारसंयुतम् ॥
शकुनाख्यविमानस्यपीठाकारइतीरितः ॥

॥ अथ नाळस्तंभनिर्णयः ॥

स्तंभमूलंवितस्तीनां पंचत्रिंशदितीरितम् । अंतर्वलयमानंतु त्रिंशद्वितस्तयःक्रमात् ॥
स्तंभमध्यप्रमाणंतु वर्तुलाकारतोबहिः । वर्णितंशास्त्रतरसम्यक्पंचविंशद्वितस्तयः ॥
तदंतर्वलयाकारो वितस्तीनांहिविंशतिः । स्तंभान्त्यस्य बहिर्गात्रंवर्तुलाकारतःक्रमात ॥
विंशद्वितस्तयःप्रोक्तास्तदंतर्वलयाकृतिः । वितस्तीनांपंचदशेत्युक्तम् शास्त्रमनीषिभिः ॥
एवंप्रमाणतोशीतिवितस्त्यौन्नत्यतःक्रमात् । नाळस्तंभंराजलोहात्कारयेद्यानकर्मणि ॥
तन्मूलेपंचदशांगुलप्रमाणात्रधिक्रमात् । पीठेस्तंभप्रतिष्ठार्थम् कुर्यादावर्तकीलकम् ॥
कर्तुंन्यूनाधिकम् वायुवेगंकालोचितंयथा । स्तंभांतरेदृढंचक्रषट्कंसंस्थापयेत्क्रमात् ॥

॥ चक्रनिर्णयः ॥

पीठाच्चतुर्वितस्तीनामूर्ध्वेस्तंभांतरेक्रमात । सरंध्रंवर्तुलंचक्रत्रयंसंधारयेत्क्रमात् ॥२०४०॥
चक्रावर्तंवितस्तीनांसार्धपंजदशस्मृतम् । पीठाच्चतुश्चत्वारिंशद्वितस्त्योर्ध्वेतथैवहि ॥
सरंध्रंवर्तुलंचक्रत्रयम् सम्यक्प्रतिष्ठितम् । एतेषूर्ध्वाधस्थचक्रद्वयम् दृढमचंचलम् ॥
यथाभवेत्तथासम्यग्बध्नीयाच्छंकुभिःक्रमात । कालानुसारतोमध्यचक्रसंभ्रमणायहि ॥
नाळस्तंभस्य बाह्येकीलकाःसम्यक्प्रतिष्ठिताः । चक्रेषुरंध्रस्थितत्वादचलत्वाद्द्विचक्रयोः ॥
मध्यचक्रभ्रमात्सम्यक्चक्रत्रयसमूहतः । वायुसंचारणार्थायसम्यङ्मार्गःकृतोभवेत् ॥२०४५॥
एतेनवायुसंचारस्तिरोधानोप्ययथाक्रमम् । अनुलोमाद्विलोमाच्चबाह्यकीलकचालनात् ॥
भवेत्कालानुसारेण सप्रमाणम् यथाविधि ॥

॥ गवाक्षशिखरनिर्णयः ॥

बाह्यावृत्तंगोपुरस्य सार्धपंचदशक्रमात् । वितस्तिप्रमाणमिति शास्त्रैःप्रोक्तम् महर्षिभिः ॥
तदंतर्वलयंपंचवितस्तिकमितीरितम् । वितस्तिद्वयमौन्नत्यम् सुदृढम् च मनोहरम् ॥
गवाक्षशिखरंसम्यक्नाळस्तंभोपरिन्यसेत् ॥

## ॥ अथ रविचुंबकमणिनिर्णयः ॥

प्रदक्षिणावृत्तस्सत वितस्तिःस्यान्मणेस्तथा । वितस्तिद्वयमायामम् वितस्तिद्वयगात्रकम् ॥
आदित्यचुंबकमणिं शिखरस्योपरिन्यसेत् ॥

## ॥ चतुरौष्मिकयंत्राणि ॥

पीठस्योपरिभागेतुवितस्तीनां चतुर्दश । ततस्त्र्यंगुलमानेन सौधत्रयम् मनोहरम् ॥
वितस्तीनांदशौन्नत्ये गात्रेत्र्यंगुलसंयुतम् । एतदाकारसंयुक्तम् स्तंभोपरियथाविधि ॥
संस्थापितम् कोलशंकुबंधनात्सुदृढम् यथा । प्रतिस्तंभांतरायस्तु वितस्तिदशकःस्मृतः ॥
प्रतिस्तंभाग्रभागांते चक्रावर्तप्रकल्पनात् । परस्परम् मिळित्वाथान्योन्यंसंपरिगृह्यते ॥
एतत्पीठेचतुर्दिक्षु तत्तत्केंद्रोपरिक्रमात् । वितस्तिदशकायामम् वितस्त्यष्टोन्नतंतथा ॥
सुदृढंस्थापयेत्सम्यगौष्म्ययंत्रचतुष्टयम् । यंत्रप्रदक्षिणावृत्तो वितस्तिदशकंस्मृतम् ॥
वितस्त्यष्टकमौन्नत्यमितिशास्त्रविनिर्णयः । एतन्मध्यस्थितस्तंभपंक्तिमार्गानुसारतः ॥
व्योमयानप्रयातॄणामुपवेष्टुंयथाविधि । गृहान्प्रकल्पयेच्छिल्पशास्त्ररीत्यापृथक्पृथक् ॥
एवमुक्त्वाप्रथमसौधप्रदेशेगृहकल्पनां । विमानस्यांगयंत्राणांस्थापनार्थमतःपरम् ॥
द्वितीयसौधप्रमाणमुक्त्वातस्मिन्यथाविधि । स्तंभपंक्त्यनुसारेणगृहान्सम्यक्पृथक्पृथक् ॥
अंगयंत्रप्रमाणानुसारतः परिकल्पयेत् । अथैकैकगृहेसिद्धान्यंगयंत्राण्यथाविधि ॥
एकैकंस्थापयेत्सम्यग्दृढंकीलैःपृथक्पृथक् । वितस्तीनांषष्टितममौन्नत्यंउक्ततथैवहि ॥
वितस्तिषोडशायामम् ऊर्ध्वौन्नत्यमतःपरम् । चतुर्दशवितस्त्योपर्यंगुलत्रयमेवच ॥२०६५॥
द्वितीयसौधप्रमाणमेवमुक्तंमहर्षिभिः । चत्वारिंशद्वितस्तिप्रमाणमुन्नतमद्भुतम् ॥
वितस्त्यष्टकमायामम् तदूर्ध्वौन्नत्यकंतथा । चतुर्दशवितस्त्योपर्यंगुलत्रयमेवहि ।
तृतीयसौधप्रमाणमेवंशास्त्रेणवर्णितम् । अंगयंत्रस्थापनार्थम् तत्रत्यस्तंभपंक्तिभिः ॥
जनोपवेशनार्थंज गृहान्सम्यक्प्रकल्पयेत् । पीटात्त्र्यावरणांतंच तदारभ्यपुनःक्रमात् ॥
नाळस्तंभांतपर्यंतम् चतुर्दिक्षुपृथक्पृथक् । रज्ज्वाकारारंध्रनाळादेकैकस्यपरस्परम् ॥२०७०॥
विनाबंधंयोजितंस्यात्सुदृढम् मृदुळंक्रमात् । पीठावरणतस्तद्वत्सार्धसप्तवितस्त्यधः ॥
यावत्पीठप्रमाणंस्यात्तावदेवयथाविधि । एकमावरणंकुर्यात्सुदृढंसुमनोहरम् ॥



(32)

यानोपयुक्तयंत्राण्येतस्मिन्संरचितानिहि । तन्मध्यकेंद्रेनाळस्तंभमूलोस्तिदृढंयथा ॥
एतन्नाळस्तंभमूले चतुर्दिक्षुयथाक्रमम् । वाताकर्षणयंत्राणि चत्वारिस्थापितानिहि ॥
तत्प्रेरकाणिचत्वारि औष्म्ययंत्राण्यपिक्रमात् । पश्चाद्भागेविमानस्य पूर्वभागेपिचस्थिते ॥
वाताकर्षणयंत्रद्वयमध्यस्थकेंद्रके । वातपाचकयंत्रंच सुदृढंस्थापितंभवेत् ॥२०७५॥
एतद्यंत्रमुखेवातपाचनार्थंयथाविधि । बाह्यवायुंपूरयितुम् पृथग्यंत्रद्वयंक्रमात् ॥
यानस्यपूर्वपश्चाद्भागयोस्सम्यक्प्रतिष्ठितम् । विमानोभयपार्श्वस्थपक्षयोरुभयोरपि ॥
प्रसारणाघातक्रियासिद्ध्यर्थंचतथैवहि । तिर्यङ्न्यग्गुलरूपेणोपसंहारायशास्त्रतः ॥
सानुकूलंयथातत्रकीलकाःस्थापितास्तथा । विमानस्यपुरोभागस्थितपंकभ्रमायहि ॥
शलाकानाळमध्यस्थायोजिताश्चौष्म्ययंत्रके ॥

## ॥ अथ पक्षनिर्णयः ॥

त्रिंशद्वितस्त्युन्नतम् तदायामोष्टवितस्तिकः । गात्रेसार्धवितस्तीतिनिर्णितंपक्षमूलयोः ॥
तन्मूलौकीलकेसम्यक्सुदृढंयोजितंक्रमात् । पक्षयोःपश्चिमेभागे रेखात्रपरिदृश्यते ॥
तत्पुरोभागविस्तारो वितस्तिदशकंभवेत् । पश्चाद्भागस्यविस्तारो चत्वारिंशद्वितस्तयः ॥
पक्षौन्नत्यंवितस्तीनां भवेत्षष्टितमःक्रमात् । एतदाकारसंयुक्तम् पक्षद्वयमितीरितम् ॥

## ॥ अथ पुच्छप्रमाणं ॥

पुच्छोन्नत्यंवितस्तीनां विंशतिस्स्यात्तथैवहि । तत्पुरोभागविस्तारःसार्धत्रयवितस्तिकः ॥
तत्पश्चाद्भागविस्तारो वितस्तीनांतुविंशतिः । एषापुच्छाकृतिरितिप्रवदंतिमनीषिणः ॥२०८६॥

## ॥ वाताकर्षणयंत्रं तदौष्म्यकयंत्रंच ॥

यंत्रौन्नत्यंवितस्तीनामुक्तंपंचदशक्रमात् । वितस्तित्रयमायाम इतिशास्त्रेनिरूपितम् ॥

## ॥ नाळप्रमाणं ॥

वितस्तित्रयमौन्नत्यम् तन्नाळानांतथैवहि । बाह्यावृत्तंवितस्तीनां चत्वारीतिविनिर्णितम् ॥
एतद्यंत्रशलाकाश्चकीलकाद्यास्तथैवहि । कृतास्तदनुसारेण शास्त्रोक्तेनैववर्त्मना ॥

॥ अथ वातपायंत्रनिर्णयः ॥

वितस्तिद्वादशौन्नत्यम् वर्तुलावरणंतथा । वितस्तिसार्धनवकप्रमाणेनाभिवर्णितम् ॥२०९०॥
इत्युक्तवातदायंत्रप्रमाणंशास्त्रतःक्रमात् । अंतःप्रदक्षिणावृत्ततंत्रिभिःपरिवेष्टितम् ॥
एतदंतर्मुखेनाळमेकंसंधारितंभवेत् । आवृत्ततंत्रीनाळेंतर्वातसंचारतस्तथा ॥
तद्बहिःपक्वतैलस्यज्वालासंचारवेगतः । भवेत्संतापितोवायुःशतकक्ष्याप्रमाणतः ॥
एतत्संतापितंवायुम् औष्म्ययंत्रेनियोजितुम् । बाह्यस्थशीतवायोराकर्षणायतदंतरे ॥
नाळाश्चकीलकाएतद्यंत्रेसंधारिताःक्रमात् । तैलज्वालासमुत्पन्नधूमंवेगान्मुहुर्मुहुः ।२०९५॥
बाह्येनियोजितुंयंत्रात्स्तंभमूलावधिक्रमात् । षडंगुलगात्रनाळायंत्रेस्मिन्संप्रतिष्ठिताः ॥
बाह्यस्थंपूर्वोक्तशीतवायुंयंत्रांतरेक्रमात् । नियोजितुंपुनर्वातयंत्राणिस्थापितानिहि ॥
वितस्तिदशकावृत्तचक्राकाराणिशास्त्रतः ॥

॥ अथ चुल्ली ॥

वातपाचक्रयंत्रस्यपूर्वभागेयथाविधि । तैलप्रज्वलनार्थायदीपचुल्लीप्रतिष्ठिता ॥
तस्मिन्दीपप्रतिष्ठार्थमग्न्युत्पत्यर्थमेवतु । विद्युद्यंत्रंस्थापितंस्यात्कीलकैस्सुदृढंयथा ॥२१००॥
एतेनाग्निंज्वलयितुंभवेत्कालानुसारतः । दीपोपसंहारकालेतैलसंरक्षणायहि ॥
प्रतिष्ठितंभवेदेककीलकंचयथाविधि । पुच्छांतरप्रदेशांतेकर्तुंस्याद्रज्जुबंधनम् ॥
यंतृणाकृतरज्ज्वाकर्षणतस्तुमुहुर्मुहुः । पुच्छोभ्राम्यतिवेगेनोर्ध्वाधोभागदेशयोः ॥
एतेनारोहणेतद्वद्विमानस्यावरोहणे । प्रयाणकालेसर्वत्रसहायोभवतिध्रुवम् ॥
तथैवव्योमयानस्यपार्श्वयोरुभयोरपि । न्यग्गुलीकरणार्थायपक्षयोरुभयोःक्रमात् ॥२१०५॥
पक्षाघातककीलेपिकर्तुंस्याद्रज्जुबंधनम् । एतद्रज्ज्वाकर्षणेनपक्षयोरुभयोःक्रमात् ॥
विस्तृतत्वंचन्यग्भावःक्रमाद्भवतिनान्यथा । प्रथमावरणादस्तिवितस्तिदशकादधः ॥
सार्धद्वयवितस्त्यूर्ध्वौन्नत्यमात्रंमनोहरम् । अन्यदावरणंपीठात्किंचिन्न्यूनंप्रमाणतः ॥
वातनाळस्तंभमूलमेकस्मिन्शास्त्रतोदृढम् । प्रदक्षिणावृत्तभागात्सम्यक्संयोचितंभवेत् ॥

॥ तैलपात्रनिर्णयः ॥

एतस्मिन्नेवविधिवज्जलावरणसंयुतम् । वितस्तीनांसार्धनवप्रमाणौन्नत्यकंतथा ॥२११०॥



चतुर्वितस्त्यावृत्तंचायामेनववितस्तयः । षडंगुलंतदुपरिप्रमाणेनाभिवर्णितम् ॥
वितस्तीनांपंचदशविस्तृताकारसंयुतम् । तैलपात्रद्वयंसम्यक्स्थापितंसुदृढंयथा ॥

॥ अथ वातनाळनिर्णयः ॥

वितस्तीनांपंचदशप्रमाणौन्नत्यसंमितम् । वितस्तिद्वयगात्रंचवर्णितंतदनंतरम् ॥
सार्धषट्कवितस्तीनां विस्तारंसुमनोहरम् । वाताकर्षणभस्त्राणां चतुष्टयमुदाहृतम् ॥
वाताकर्षणयंत्रैरसंभूतवायुंयथाविधि । एतस्मिन्सन्नियोज्याथयावदिच्छानुसारतः ॥२११५॥
बाह्येप्रेरयितुंनाळंकीलकंचसुशोधितम् । संधारितम् भवेदस्मिन्शास्त्रोक्तेनैववर्त्मना ॥
एतदावरणाधस्ताच्चतुर्दिक्षुयथाविधि । वितस्तिसप्तवलयाकाराणिसुदृढान्यपि ॥
चक्राणिभूसंचारयोग्यानिसंधारितानिहि । एवम् **शकुन**यंत्रस्यरचनाविधिरीरिता ॥

---

सू. ६ **सुंदरोथ**

एवमुक्त्वा शकुनविमानम् शास्त्रानुसारतः । अथेदानीं सुंदरविमानम् सम्यक्प्रचक्षते ॥
यानप्रबोधकपदद्वयमस्मिन्निरूपितम् । तत्रादिमपदाद्यानमसम्यक्प्रकाशितम् ॥२१२०॥
आनंतर्यार्थवाचीस्यात्द्वितीयपदमत्रतु । एवंपदद्वयस्यार्थस्सामान्येननिरूपितः ॥
इदानींतद्विशेषार्थस्संग्रहेणप्रचक्ष्यते । अष्टांगान्यस्यशास्त्रेस्मिन्निर्णीतानियथाक्रमम् ॥
तेषांस्वरूपंविधिवद्विचार्याथपृथक्पृथक् । विलिख्यतेयथाशास्त्रम् संग्रहेणयथामति ॥
आदौपीठस्ततोधूमनाळस्तंभस्तथैवहि । पश्चाद्धूमोद्गमयंत्रपंचकंचततःपरम् ॥
मुञ्युलोहकनाळश्चततोवातप्रसारणम् । विद्युद्यंत्रंततश्चातुर्मुखोष्म्यकमतःपरम् ॥२१२५॥
विमाननिर्णयश्चैतान्यष्टांगानिभवंतिहि । तेष्वादौयानपीठस्यरचनाविधिरुच्यते ॥

॥ अथ पीठनिर्णयः ॥

चतुरश्रम् वर्तुलंवावितस्तिशतकावृतम् । अथवायन्मनोद्दिष्टम् तत्प्रमाणेनशास्त्रतः ॥
राजलोहादेवपीठम् वितस्त्यष्टकगात्रकम् । कृत्वाथपाचयेत्सप्तवारंमंचुकतैलतः ॥
ततःपीठंसमाहृत्य तस्मिन्केंद्राणिकारयेत् । केंद्रयोरुभयोर्मध्ये वितस्तिदशकांतरम् ॥
विहायैकैकपार्श्वेचप्रत्येकंदशसंख्यया । आहृत्यचत्वारिंशत्केंद्राणिकुर्याद्यथाक्रमम् ॥२१३०॥
केंद्रमानम् पंचदशवितस्तिरितिनिर्णितम् । तन्मध्येद्वादशवितस्त्यायामेनयथाविधि ॥
धूमप्रसारणनाळस्तंभकेंद्रंचकल्पयेत् ॥

॥ अथ नाळस्तंभनिर्णयः ॥

षट्पंचाशद्वितस्त्यौन्नत्यंतथैवयथाविधि । चतुर्वितस्त्यायामंचनाळस्तंभंप्रकल्पयेत् ॥
धूमसंपूरणार्थाय तन्मूलेवर्तुलाकृतिम् । वितस्त्यष्टकमायामम् अंतर्वर्तुलविस्तृतम् ॥
चतुर्वितस्त्युन्नतंचकारयेत्कुंभवत्ततः । स्थापयेत्तन्मध्यकेंद्रे सुदृढंशास्त्रमानतः ॥२१३५॥
षड्वितस्त्यंतरायामम् जलपात्रमतःपरम् । तन्मूलेकल्पयित्वाथतैलपात्रम् यथाविधि ॥
चतुर्वितस्त्यायामम् तन्मध्येसंस्थापयेद्दृढम् । तन्मूलेथयथाशास्त्रम् वितस्त्यैकप्रमाणकम् ॥
विद्युत्संघर्षणमणिकीलकंस्थापयेद्दृढम् । पात्रेधूमांजनतैलम् द्वादशांशंप्रपूरयेत् ॥
शुकतुंडिकतैलस्य विंशत्यंशस्तथैवहि । नवांशंकुलटीतैलम् पूरयेत्सप्रमाणतः ॥
यथेष्टंपूरयेयद्वा एवंभागक्रमात्सुधीः । विद्युत्संयोजनार्थायमणिकीलांतरेक्रमात् ॥२१४०॥
संधारयेन्नाळमार्गात्तंत्रीद्वयमतःपरम् । नाळस्तंभांतरेधूमस्तंभनार्थंतथैवहि ॥
प्रसारणार्थंचवेगादनुकूलम् यथाविधि । आवृत्तचक्रत्रितयम् सरंध्रंचदृढंयथा ॥
स्थापयेत्सरळंकीलकद्वयेनयथाविधि । एतत्संचालनार्थायत्रिचक्रकीलकौतथा ॥
अनुलोमविलोमाभ्यां स्तंभबाह्येनियोजयेत् । स्तंभांतरस्थत्रिचक्रकीलकानांतथैवहि ॥
बाह्यस्थत्रिचक्रकीलकेषु संयोजनंयथा । तथानाळांतरात्तंत्रीस्समाहृत्ययथाक्रमम् ॥२१४५॥
आदौमध्येतथाचांतेक्रमात्संख्यानुसारतः । संधारयेद्यथाशास्त्रंस्तंभेस्थानत्रयेक्रमात् ॥
इतिधूमप्रसारणनाळस्तंभविनिर्णयः ॥



॥ अथ धूमोद्गमयंत्रं ॥

वेगादूर्ध्वमुखे धूमोत्क्षेपणंकुरुतेयतः । अतोधूमोद्गमइतिनामयंत्रस्यवर्णितम् ॥
हिमसंदर्धकस्सोमस्सुंडालश्चयथाक्रमम् । द्वात्रिंशत्पंचविंशाष्टत्रिंशद्भागान्क्रमेणतु ॥
संपूर्यनळिकामूषामुखेपश्चाद्दृढंयथा । स्थापयित्वाचक्रमुखकुंडेऽजामुखभस्त्रतः ॥२१५०॥
द्वादशोत्तरसप्तशतकक्ष्योष्णप्रमाणतः । संगालयेद्यथाशास्त्रमानेत्रोन्मीलनावधि ॥
ततोभवेद्धूमगर्भलोहस्सूक्ष्मोमृदुर्दृढः । कुर्याद्धूमोद्गमंयंत्रमेतेनैवयथाविधि ॥
प्रदक्षिणावृत्तकीलवितस्तिदशकोन्नतम् । पीठस्याधोभागमध्यकेंद्रस्थानेयथाभवेत् ॥
पीठंकुर्यात्पंचदशवितस्त्यायामतस्तथा । धूमोष्म्यकप्रसरणार्थायपश्चाद्यथाविधि ॥
जलौष्म्यकधूमनाळद्वयंतस्यतुपार्श्वयोः । स्थापयेत्सुदृढंसम्यग्दक्षिणोत्तरतःक्रमात् ॥२१५५॥
धूमसंपूरणार्थाय तन्नाळद्वयमूलयोः । चतुर्वितस्त्यायामंचवितस्तित्रयमुन्नतम् ॥
कुंभवत्कारयेद्वर्तुलाकारंसुदृढंयथा । वितस्त्यायामकंचाष्टवितस्त्युन्नतमेवच ॥
तदंतेचषकाकारम् वितस्तित्रयविस्तृतम् । एवंक्रमेणविधिवत्कृत्वा नाळद्वयंततः ॥
धूमपूरकनाळोर्ध्वभागेसंयोजयेद्दृढम् । तन्मूलेजलपात्रंचतन्मध्येतैलपात्रकम् ॥
तत्पुरस्ताद्विद्युद्घर्षकमण्योःकीलकद्वयम् । धूमप्रसारणनाळस्तंभवत्स्थापयेत्क्रमात् ॥२१६०॥
पार्श्वयोरुभयोरौष्म्यनाळस्यचयथाविधि । जलकोशद्वयंपश्चात्कारयेत्सुदृढंयथा ॥
विद्युद्यंत्रान्नाळमेकंसमाहृत्यसतंत्रिकम् । विद्युद्घर्षकमणिकीलकेसंनियोजयेत् ॥
लिंकाशीतिप्रमाणेनविद्युच्छक्तियथाविधि । पूर्वोक्तनाळस्थतंत्रीमार्गात्संचोदयेद्यदि ॥
तच्छक्तिवेगान्मणिसंघर्षणंप्रभवेत्स्वतः । तेनधूमोभवेत्तैलंपश्चात्सम्यक्शनैश्शनैः ॥
विद्युच्छक्तिचतद्धूमःनाळमार्गाद्यथाक्रमम् । संगृह्यवेगाद्विधिवत्पश्चात्कीलकमार्गतः ॥२१६५॥
संचोदयेद्वारिकोशद्वयमध्येप्रमाणतः । एतद्वेगादौष्म्यधूमाकारंभवतितज्जलम् ॥
तैलधूमंधूमनाळे जलधूमंतथैवहि । जलौष्म्यनाळे विधिवत्पूरयेत्सप्रमाणतः ॥
एतद्धूमद्वयंपश्चात्यथोर्ध्वमुखतःक्रमात् । निर्गच्छेद्वेगतःपंचशतकक्ष्योष्णमानतः ॥
तथाकीलकसंधानम् कुर्यात्कालानुसारतः । धूमसंरोधनार्थंच चोदनार्थंतथैवहि ॥
संयोजयेत्कीलकाभ्यांसम्यक्संभ्रामयेद्यथा । धूमबधप्रसारणौपश्चात्कालानुसारतः ॥२१७०॥
भवेत्कीलकसंचालनेनसम्यग्यथाविधि । एवंक्रमेणयंत्राणिचत्वारिंशद्यथाविधि ॥

रचयित्वापीठकेंद्रस्थानेष्वथपृथक्पृथक् । संस्थापयेत्ततस्तेषां चतुर्दिक्षुयथाक्रमम् ॥
एकैकयंत्रौष्म्यधूमनाळमूलद्वयेक्रमात् । वितस्त्येकावृतंचैववितस्तिद्वादशोन्नतम् ॥
संधारयेत्कीलकेभ्यश्शुंडालद्वयमद्भुतम् । एतत्सहायतोव्योमयानंवेगात्प्रधावति ॥

॥ शुंडालस्वरूपमुक्तं लल्लेन ॥

तैलस्यधूमसंयोगाज्जलस्यौष्म्यकयोगतः । विमानमाकर्षयितुम् शुंडालान्कल्पयेत्सुधीः ॥
वटमंजूषमातंगाःपंचशाखीशिखावळी । ताम्रशीर्ष्णीबृहत्कुंभीमहिषीक्षीरवल्लरी ॥२१७६॥
शोणपर्णीवज्रमुखीक्षीरणीचयथाक्रमम् । एतेद्वादशशास्त्रेषुक्षीरवृक्षाइतीरिताः ॥
एतैराहृत्यविधिवन्निर्यासंक्षीरमेववा । अग्निबाणाद्रिदिग्रुद्रवसुदेवमुनिस्तथा ॥
गजाब्धिराश्यादित्यांशप्रकारेणयथाक्रमम् । तोलयित्वाबृहद्भांडेविनिक्षिप्यततःपरम् ॥
ग्रंथिलोहंचनागंचवज्रंबंभारिकंतथा । वैनतेयम् कंदुरंचकुड्डुपंकुंडलोत्पलम् ॥२१८०॥
एतान्संतोल्यविधिवत्समभागान्पृथक्पृथक् । भांडस्थनिर्याससमम् तद्भांडेसन्नियोजयेत् ॥
पाचयेत्पाचनायंत्राच्छास्त्रोक्तेनैववर्त्मना । द्वादशोत्तराशीतिकक्ष्योष्णवेगाच्छनैश्शनैः ॥
पश्चान्निर्यासपटयंत्रमुखेसंप्रपूरयेत् । ततस्संभ्रामयेद्वेगात्समीकरणकीलकान् ॥
एतेनतत्समीभूय कार्पासपटवत्क्रमात् । सुदृढंधूम्रवर्णंचसूक्ष्मम् मृदुसुशीतळम् ॥
अच्छेद्यंछेदनायंत्रैरुष्णवेगापहारकम् । निर्यासपटमुत्कृष्टम् भवेदत्यंतनिर्मलम् ॥२१८५॥
एतत्पटंसमाहृत्य रौहिणीतैलतःक्रमात् । यामत्रयंपाचयित्वा पश्चात्संगृह्यवारिणा ॥
क्षाळयित्वालसीतैलेपूर्ववत्पाचयेत्पुनः । पश्चादजामूत्रमध्येदिनमेकंन्यसेत्क्रमात् ॥
दद्यात्सूर्यपुटेपश्चात्क्षाळयित्वायथाविधि । शोषयित्वाऽऽतपेनाथ लेपयेत्कनकांजनात् ॥
सुवर्णवद्भातिरुचातत्पटस्सुमनोहरः । एतत्पटेनेवकुर्याच्छुंडालान्सुदृढंयथा ॥
त्रिवितस्त्यैकावृतंचैववितस्तिद्वादशोन्नतम् । गजास्यवत्प्रकर्तव्यम् अंतश्छिद्रंयथातथा ॥२१९०॥
प्रसारणोपसंहारकीलकौद्वौयथाक्रमम् । संधारयेदावृत्तकीलशंकुभिस्सुदृढंयथा ॥
उपसंहारकीलेन शुंडालश्चक्रवत्क्रमात् । भवेत्संकुचितंयंत्रमूलेशष्कुलवत्पुनः ॥
ततःप्रसारणकीलचालनात्सरळंयथा । बाहुवल्लंबमानंचभवेत्सम्यक्स्वभावतः ॥
शुंडालमध्येधूमप्रपूरणार्थंयथाविधि । यंत्राणांमूलतःस्पष्टम् कीलकान्परिकल्पयेत् ॥



यंत्रस्यधूमश्शुंडालमुखाद्बहिःप्रसारणे । पुनश्शुंडालमुखतोबाह्यवातापकर्षणे ॥२१९५॥
यथाभवेत्तथाचक्रद्वयंकीलकसंयुतम् । संधारयेत्सप्रमाणम् शुंडालेसरळंयथा ॥
यथाजलापकर्षणयंत्रकीलंतथैवहि । तच्चक्रभ्रमणार्थाययोजयेत्कीलकत्रयम् ॥
एतत्संभ्रमणेनैव वेगाद्धूमःप्रधावति । एतत्संयोजनाच्चक्रयोः शुंडालांतरेक्रमात् ॥
गमागमौभवेद्वेगात्तेनवातापकर्षणम् । धूमप्रसारणंचैवभवेदेवनसंशयः ॥
अष्टाशीत्युत्तरशतलिंकवातापकर्षणम् । धूमप्रसाणंचैवतावदेवमुहुर्मुहुः ॥२२००॥
एकदाचक्रगमनागमनाद्वेगतोभवेत् । धूमप्रसारणंयस्मिन्दिशिशुंडालतोभवेत् ॥
स्वयमेवविमानस्यगमनंवेगतोभवेत् । आवर्तनेचोर्ध्वमुखगमनेपितथैवच ॥
अधोमुखाभिगमनेकीलसंचालनात्स्वतः । यथाशुंडालसांकेतस्तथायानःप्रधावति ॥
यस्माच्छुंडालांतर्गतचक्रवेगात्प्रचालनम् । तस्माच्छास्त्रोक्तविधिनाकृत्वाशुंडालकात्क्रमात् ॥
प्रतिधूमोद्गमयंत्रमूलदेशेपृथक्पृथक् । द्वौद्वौसंधारयेत्कील शंकुभिस्सुदृढंयथा ॥२२०५॥
धूमप्रासारणनाळस्तंभमूलेयथाविधि । दक्षिणोत्तरयोस्तद्वत्पूर्वपश्चिमयोरपि ॥
संधारयेदेवमेवप्रतिपार्श्वंदृढंयथा । अंतर्बाह्योष्णवेगद्वयमग्न्यातपयोःक्रमात् ॥
सम्यङ्निवारयितुम् विधिवद्यंत्रोपरिक्रमात् । षट्संख्याकोष्मपालोहात्कुर्यादावरणंदृढम् ॥
यंत्रस्योर्ध्वाधोभागप्रदेशयोःपार्श्वयोरपि । यथास्याद्धूमसंचारःकीलकान्परिकल्पयेत् ॥
एवंधूमोद्गमयंत्रंकर्तव्यंसावधानतः । एतान्यंत्राणिचत्वारिंशत्कृत्वासुदृढंयथा ॥२२१०॥
स्थापयेत्पीठकेंद्रेषुसम्यगावर्तकीलकान् । एतत्सहायतोव्योमयानंसंचरतिक्रमात् ॥

॥ इति धूमोद्गमयंत्रः ॥

॥ अथ विद्युद्यंत्रनिर्णयः ॥

तदुक्तंयंत्रसर्वस्वे—

संघर्षणंपाकजन्यम् जलपातंतथैवहि । सांयोजकंकिरणजन्यमित्यादीनिशास्त्रतः ॥
द्वात्रिंशदितिप्रोक्तानिविद्युद्यंत्राण्यथाक्रमम् । एतेषुव्योमयानोपयुक्तंसांयोजकंभवेत् ॥
एतेनैवप्रकर्तव्यम् विद्युद्यंत्रंयथाविधि । शक्तितंत्रेयथाप्रोक्तम् अगस्त्येनमहर्षिणा ॥

॥ उक्तं हि शक्तितंत्रे ॥

पूर्वोक्तसांयोजकलोहेनपीठंयथाविधि । पंचत्रिंशद्वितस्त्यावृताकारेणाथवादृढम् ॥२२१५॥
कृत्वापीठंततस्तस्मिन्प्रादक्षिण्यक्रमेणतु । कल्पयेत्पंचकेंद्राणितन्मध्येचैककेंद्रकम् ॥
वितस्तिपंचकांतरंकुर्यात्केंद्रद्वयांतरे । केंद्रसंख्यानुसारेणकुर्यात्पात्राण्यथाक्रमम् ॥
चतुर्वितस्त्यायामंचवितस्तिद्वयमुन्नतम् । यथाकुंभांतराळंस्यात्तथैवास्यांतराळकम् ॥
कुर्यादेवंपात्रमूलाकारंपश्चाद्यथाविधि । वितस्त्यैकायामकंचवितस्त्येकोन्नतंतथा ॥
नाळवत्कल्पयित्वाथतस्योपरिदृढंयथा । संधारयेद्यथाछिद्रम् पात्रमध्यंभवेदिति ॥२२२०॥
चतुर्वितस्त्यायामेनवर्तुलाकारतःक्रमात् । तन्नाळोर्ध्वमुखंकुर्यात्सुदृढंसुमनोहरम् ॥
पश्चान्मयूखकेशाख्यमृगचर्मसुशोधितम् । आहत्यक्षारमातृण्णोत्पन्नद्रावकपूरिते ॥
भांडेनिधायविधिवत्पाचयेद्यामपंचकम् । सम्यक्संक्षाळयित्वाथशुद्धशीतलवारिणा ॥
ज्योतिर्मुखीकारुवेल्लीसारस्वतमतःपरम् । एतेषांबीजतस्तैलंसमाहरेत्पृथक्पृथक् ॥
त्रिसप्तषोडशांशप्रकारेणैकघटेक्रमात् । संमेळ्यपश्चात्क्षारस्यद्रावकंचयथाविधि ॥२२२५॥
चतुष्षष्ट्येकभागांशम् तस्मिन्संमेळयेत्पुनः । तच्चर्मपुनरादाय एतत्तैलेनियोजयेत् ॥
पश्चात्पूर्यपुटेदद्याच्चतुर्विंशद्दिनावधि । रक्तवर्णात्थाळथळयम् तच्चर्मणिभवेत्क्रमात् ॥
पूर्वोक्तपात्रनाळस्य मुखच्छिद्राकृतिर्यथा । प्रच्छिद्यतच्चर्मतस्मिन्पंचरंध्राणिकारयेत् ॥
पश्चात्समंतात्तत्पात्रमुखेछिद्रंदृढंयथा । आच्छाद्यतच्चर्मपश्चाद्बंधयेच्छंकुभिःक्रमात् ॥
एवंक्रमेणैवकृत्वा पंचपात्राण्यथाविधि । पीठस्थपंचकेंद्रेषु स्थापयेत्कीलशंकुभिः ॥२२३०॥
पश्चान्मूत्रंगार्दभानां षोडशद्रोणसम्मितम् । लिंकषोडशकेंगालान् सुदृढंखनिजोद्भवान् ॥
तथैवलवणंलिकत्रयंचैवततःपरम् । लिंकद्वयम् शुद्धसार्पंशुद्धम् लिंकद्वयंरविम् ॥
पूरयेत्पूर्वदिक्पात्रे तत्तद्भागानुसारतः । एवंसंपूर्यप्राचीदिक्पात्रेपश्चात्तथैवहि ॥
पश्चात्पश्चिमदिक्पात्रेवक्ष्यमाणान्प्रपूरयेत् । सप्तविद्युद्रममणिःप्राणक्षारत्रयोदश ॥
द्वाविंशच्छशविष्टाचसंमेळ्यविधिवत्ततः । यंत्रेसंपूर्यविधिवदाहरेत्द्रावकंक्रमात् ॥२२३५॥
भागद्वयम् चोष्ट्रमूत्रम् द्रावकस्यैकभागकम् । पूरयित्वाप्रतीचीदिग्भांडेसम्यक्प्रमाणतः ॥
पश्चात्खड्गमृगास्थीनि पंचाशल्लिंकमेवहि । लिंकत्रिंशद्बंधकंच चिंचाक्षारंततथैवहि ॥
लिंकषोडशकम् तद्वदयस्कांतमतःपरम् । अष्टाविंशल्लिंकमात्रम् तन्मूत्रेसंनियोजयेत् ॥



पश्चात्सप्तदशोत्तरशतसंख्यात्मकंपुनः । तटिन्मित्रमणिं तस्मिन्स्थापयेन्मध्यभागके ॥
एवंसंपूर्य विधिवत्पश्चिमे केंद्रपात्रके । वक्ष्यमाणपदार्थांश्चोत्तरपात्रेप्रपूरयेत् ॥२२४०॥
ततोऽपामार्गबीजानां तैलमेकादशांशकम् । सर्पास्यबीजतैलंच द्वात्रिंशांतम् तथैवहि ॥
चत्वारिंशदयस्कांततैलांशंचयथाक्रमम् । त्र्युत्तराशीतिभागांशगजमूत्रेनियोजयेत् ॥
तैलत्रयतृतीयांशादधिकंगजमूत्रकम् । मेळयित्वासप्रमाण सुदीर्घाकेंद्रसंस्थिते ॥
पात्रेसंपूरयित्वाथ पश्चात्तस्मिन्यथाविधि । पारदंसैंहिकक्षारम् तथापार्वणिसत्त्वकम् ॥
त्रिंशद्विंशत्पंचविंशत्पलभागान्पृथक्पृथक् । प्रत्येकंतोलयित्वाथ सम्यक्संपूरयेत्क्रमात् ॥
मणिप्रकरणोक्ताष्टशतसंख्यात्मकंशिवम् । स्थापयेद्भास्करमणिं तन्मध्येतैलशोधितम् ॥
एवमुत्तरकेंद्रस्थपात्रेवस्तुप्रपूरणम् । कृत्वादक्षिणकेंद्रस्थपात्रेप्येवंयथाविधि ॥
द्वादशश्चैकत्रिंशत्षोडशभागांशकःक्रमात् । ग्रंथिकद्रावकंपंचमुखीद्रावकमेवच ॥
श्वेतपुंजाद्रावकंच मेळयित्वायथाविधि । गोमूत्रेद्रवभागांशात्पंचभागाधिकेक्रमात् ॥
संयोज्यपूर्वोक्तपात्रे पूरयेत्सप्रमाणतः । ज्योतिर्मयूखकंदंसप्तचत्वारिंशतिस्तथा ॥२२५०॥
अष्टविंशल्लिंककांतलोहंचाष्टादशात्मकम् । द्वात्रिंशल्लिंकप्रमाणकुड्डुपंदशसंख्यकम् ॥
तोलयित्वाथतत्पात्रेयोजयित्वातथैवहि । द्विनवत्यात्मकंज्योतिर्मणिंक्षीरविशोधितम् ॥
तस्मिन्संस्थापयेत्पश्चाच्चाक्रायणिमतंयथा । एवंदक्षिणकेंद्रस्थपात्रेवस्तुप्रपूरणम् ॥
कृत्वाथमध्यकेंद्रस्थपात्रेशक्तिप्रपूरयेत् । कर्तव्यंचपलग्राहकलोहेनैवशास्त्रतः ॥
विद्युत्संपूरकार्थायशक्तिपूरकपात्रकम् ॥

॥ चपलग्राहकमुक्तं लोहतन्त्रे ॥

चूर्णग्रावश्वेतनिर्यासमृत्काचां तथैवहि । मधुशुण्डिककन्दर्पकर्कटत्वग्वराटिकान् ॥२२५६॥
कङ्कोलनिर्यासकंचेत्येतत् संशोध्यशास्त्रतः । वसुरुद्राब्धिनक्षत्रदिग्बाणाग्निमरुत्क्रमात् ॥
टङ्कणंद्वादशांशंच सन्तोल्यविधिवत् तथा । उरणास्याख्यमूषायां तत्तद्भागानुसारतः ॥
सम्पूर्यविधिवत्पश्चात् कुण्डेकुण्डोदराभिधे । संस्थाप्यत्रिमुखीभस्त्रात्ध्मनेत् सम्यग्यथाविधि ॥
सप्तषोडशोत्तरचतुश्शतकक्ष्योष्णवेगतः । संगृह्यतद्रसंयन्त्रमुखे सम्पूरयेच्छनैः ।२२६०॥
चपलग्राहकंलोहम् भवेत्पश्चाद्दृढंमृदु ॥

॥ शक्तिपूरकपात्रनिर्णयः ॥

वितस्तिपञ्चकायामम् वितस्त्यष्टकमुन्नतम् । अर्धचन्द्राकृतिंपीठम् गात्रमेकवितस्तिकम् ॥
चपलग्रहकलोहेनैव कुर्याद्यथाविधि । शक्तिपूरकपात्रंतन्मध्ये संस्थापयेत्क्रमात् ॥
पात्रमूलंबृहत्कुम्भाकारवद् वर्तुलंतथा । द्रोणवन्मुखभागंच कल्पयित्वायथाविधि ॥
एतदाकारतः काचकवचंतस्यकारयेत् । वितस्तित्रयमायामम् षड्वितस्त्युन्नतंतथा ॥२२६५॥
नालद्वयंप्रकर्तव्यम् द्रोणवत्सुदृढंयथा । स्थापयेत्तत्पात्रमध्ये दक्षिणोत्तरतःक्रमात् ॥
चक्रद्वयंचोभयनालमध्ये स्थापयेत्क्रमात् । तयोरावरणंकुर्यात् काचेनैवाथपूर्ववत् ॥
चक्रयोरुभयोर्मध्ये नालयोर्बाह्यतःक्रमात् । सन्धिकीलंकल्पयित्वास्थापयेत् सरलंयथा ॥
भ्रमणात्सन्धिकीलस्य नालयोरुभयोरपि । चक्राणिभ्रामयेद्वेगात् तेनशक्त्यूर्ध्वगाभवेत् ॥
चतुर्दिक्षुस्थितविद्युत्पात्रमूलाद्यथाविधि । मध्यपात्रस्थनालद्वयमूलावधिक्रमात् ॥२२७०॥
नालद्वयमयस्कान्तलोहेन रचितंततः । षडङ्गुलायामयुक्तम् सन्धानंकारयेदथ ॥
वेष्टयेद् रुरुकमृगचर्मनालद्वयोपरि । तस्योपरिपुनः पट्टतन्तुर्वापटमेववा ॥
वेष्टयेत्सुदृढम् सम्यक्पश्चात्तन्नालयोःक्रमात् । कृत्वावज्रमुखीताम्रतन्त्रीन्द्रावकशोधितान् ॥
एकैकनालान्तराले द्वौद्वौतन्त्रीन्नियोजयेत् । तत्तन्त्रीन् शक्तिपूरकपात्रनालद्वयान्तरे ॥
सन्धारयेत्समाहृत्य काचकुप्पिकपूर्वकम् । शक्तिपूरकपात्रेथ पारमष्टपलंन्यसेत् ॥२२७५॥
एकनवत्युत्तरत्रिशतसंख्याकात्मकंततः । विद्युन्मुखमणिताम्रतन्त्रीभिः परिवेष्टितम् ॥
संयोगकीलकयुतम् तस्मिन्सन्धारयेत्क्रमात् । पश्चात्पूर्वोक्तनालस्थतन्त्रीनाहृत्ययत्नतः ॥
विद्युन्मुखमणेस्संयोजनकीलकतन्त्रिषु । सन्धारयेद्दृढम् काचकंकुरन्ध्रमुखेनहि ॥
एवंकृत्वामध्यपात्रम् विहायाथपुनःक्रमात् । अवशिष्टेषुपात्रेषु पृथक्पृथग्यथाविधि ॥
मन्थानवत्स्थितौ द्वौद्वौमथनोन्मथनाभिधौ । स्थापयेत्कीलकस्तम्भौ सरलभ्रमणंयथा ॥
पात्राणांमध्यकेंद्रेषु शास्त्रोक्तेनैवत्ववर्त्मना । अयस्कान्तेनवा नोचेच्छक्तिस्कन्धेनवाकृतान् ॥
स्तम्भान्संस्थापयेत् तेषुएकैकंचपृथक्पृथक् । वितस्तित्रयमौन्नत्यम् गात्रमेकवितस्तिकम् ॥
एकैकस्तम्भप्रमाणमिति शास्त्रविनिर्णयः । मथनोन्मथनयन्त्रपूर्वभागे यथाक्रमम् ॥
उत्क्षेपणापक्षेपणचक्रकीलान् पृथक्पृथक् । सन्धारयेत्ततो मध्यस्तम्भस्थानाद्यथाक्रमम् ॥
उत्क्षेपणापक्षेपणकीलावधिसुशोधितम् । अष्टाङ्गुलायामनालमेकम् सन्धारयेद्दृढम् ॥२२८५॥



पश्चात्पञ्चाङ्गुलायामचक्राणि सुदृढान्यपि । कृत्वाजलाहरणयन्त्रचक्रवन्मनोहरम् ॥
सन्धारयेद्यथाशास्त्रम् पञ्चसंख्याक्रमेणतु । कीलकैस्सरलैस्सम्यङ्नालस्योभयपार्श्वयोः ॥
ततश्शक्तिस्कन्धलोहाद्दङ्गुलद्वयमानतः । पट्टिकान् कारयित्वाथशोधयित्वायथाविधि ॥
आवृत्तनालान्तर्गतचक्राण्यारभ्य शास्त्रतः । मथनोन्मथनयन्त्रवामदक्षिणपार्श्वयोः ॥
संस्थितोत्क्षेपणापक्षेपणचक्रान्तरावधि । मथनोन्मथनयन्त्रोभयपात्रस्थकेंद्रयोः ॥२२९०॥
संस्थितत्रिचक्रमुखस्तम्भकीलकयोःक्रमात् । संयोज्यविधिवत्पश्चात् स्तम्भस्थप्रतिनालयोः ॥
पार्श्वयोरुभयोर्मध्ये चानुलोमविलोमतः । सन्धारयेद्भ्रामणककीलकान्सुदृढंयथा ॥
एतत्कीलकभ्रमणाद्दधि निर्मथनेयया । मंथानरज्जुग्रहण हस्तौवेगात्पुनःपुनः ॥
ऊर्ध्वाधोभागयोस्सम्यगनुलोमविलोमतः । संभ्रामयेत्तथानाळोभयपार्श्वस्थपट्टिके ॥
ऊर्ध्वाधोभागयोस्सम्यग्भ्रामयेद्वेगतःक्रमात् । पश्चाद्दर्पणशास्त्रोक्त घृण्याकर्षणदर्पणात् ॥
उलूखलोपरिन्यस्त वेणुपात्राकृतिर्यथा । कुर्याच्चत्वारिपात्राणि चतुष्पात्रोपरिक्रमात् ॥
विधिवद्योजयेत्सम्यङ्मुखस्थानेपृथक्पृथक् ॥

॥ पात्रलक्षणं लल्लेनोक्तं ॥

आदावष्टांगुलायामम् वितस्त्यैकोन्नतंतथा । कृत्वातन्मध्यदेशेथ शास्त्रोक्तेनैवत्ववर्त्मना ॥
वितस्तिद्वयमायामम् षड्वितस्त्युन्नतंतथा । कल्पयित्वातदन्तेषड्वितस्त्यायामविस्तृतम् ॥
कुर्यान्मुखबिलंचैवमनाळलक्षणमीरितम् । वेणिक्षारंकाचपात्रेपंचविंशत्पलंततः ॥२३००॥
संपूर्यविधिवत्तस्मिन्संशुद्धंद्रावकैःक्रमात् । पंचविंशदुत्तरत्रिशतसंख्यात्मकंतथा ॥
शालीक्षारेणसंयोज्य निक्षिपेदंशुपामणिम् । पश्चाच्छालीतृणम् सम्यक्तस्योपरिप्रमाणतः ॥
आच्छाद्यप्रतिपात्रस्य मुखभागेदृढंयथा । संधारयेत्कीलकाभ्यां सूर्याभिमुखतःक्रमात् ॥
एभिराकर्षितास्सम्यक्किरणास्सर्वतोमुखाः । पंचोत्तरशतकक्ष्यप्रमाणोष्णेनसंयुताः ॥
चतुष्पात्रेषुवेगेनप्रत्यहंप्रविशन्तिहि । एवंक्रमाद्द्वादशाहम् आतपेतापयेद्यदि ॥२३०५॥
अशीत्युत्तरसाहस्रलिंकविद्युत्प्रजायते । प्रतिपात्रेप्येवमेव शक्तिस्संलभतेध्रुवम् ॥
एतच्छक्तिसमाहृत्य शक्तिपूरकपात्रके । सन्नियोजयितुम् पश्चादयस्कान्तस्यलोहतः ॥
कृत्वाषडंगुलायामनाळानापात्रमूलतः । आहृत्यशक्तिपूरकपात्रे संधारयेत्क्रमात् ॥

कवचंकारयेत्पश्चात्तेषांरुरुकचर्मणा । तस्योपरिविशेषेणवेष्टयेत्पट्टवस्त्रतः ॥
तत्तंतुभिर्वाविधिवत् ततोनाळान्तरेक्रमात् । शुद्धवज्रमुखताम्रतंत्रीद्वयम् सुवर्चसम् ॥
शक्तिपूरकपात्रेथयथासंयोजितंभवेत् । तथासंधारयेत्सम्यक्प्रतिनाळेयथाविधि ॥२३११॥
शक्तिपूरकपात्रेथ रसंशतपलंन्यसेत् । पश्चादेकनवत्युत्तर त्रिशतात्मकंशिवम् ॥
विद्युन्मुखमणिं पूर्वोक्ततंत्रीपरिवेष्टितम् । तस्मिन्निधायविधिवत्पश्चात्तन्मणितंत्रिषु ॥
पूर्वोक्तनाळस्थतंत्रीस्सम्यक्संयोजयेद्दृढम् । चतुष्पात्रस्थितान्शुद्धखुरतैलप्रलेपितान् ॥
संभ्रामयेद्वेगतोमथनोन्मथनकीलकान् । कक्ष्यद्विशतोष्णवेगाद्भवेत्कीलभ्रमोयदि ॥२३१५॥
चतुष्पात्रस्थसूत्रेषुपाचितेष्वंशुभिःक्रमात् । मथनोन्मथनयंत्रचक्राणिचयथाक्रमम् ॥
यथाभवेद्द्विसहस्र कक्ष्योष्णवेगतोभृशम् । तन्मूत्राणिविशेषेण दधिवन्मथयन्तिहि ॥
एतेनप्रतिपात्रेष्टशतलिंकप्रमाणतः । वेगादाविर्भवेद्विद्युच्छक्तिश्शुद्धातिवेगिनी ॥
आचतुष्पात्रमूलाग्रादाविद्युत्पूरकांतरे । संधारितकांतलोहनाळान्तर्गततंत्रिभिः ॥
एतच्छक्तिंसमाहृत्य शक्तिपूरकपात्रके । संपूरयेत्सप्रमाणम सावधानेनचेतसा ॥२३२०॥
तच्छक्तितत्रत्यमणिः पात्रेसंगृह्यपूर्यति । शक्तिपूरकपात्रस्यपुरोभागेततःपरम् ॥
वितस्तिपंचकायामम् वितस्तित्रयमुन्नतम् । कुंभवद्वर्तुलाकारम् पात्रमेकंन्यसेद्दृढम् ॥
तत्पात्रंवेष्टयेत्सम्यग्वारिवृक्षस्यचर्मणा । सर्वकालंयतोवारि तस्मिन्प्रदहतिस्वयम् ॥
ततोवारिप्रतिनिधिर्वारिचर्मनिरूपितम् । एतेनपात्रस्यजलावरणंप्रभवेद्यथा ॥
तथैववारिवृक्षस्यचर्मणाभवतिध्रुवम । संधार्यपश्चात्तत्पात्रेसप्रमाणंयथाविधि ॥२३२५॥
शिखावळीद्रावकस्यद्वादशांशम तथैवहि । अष्टादशांशायस्कान्तद्रावकम् तदनन्तरम् ॥
वज्रचुंबकद्रावस्य द्वात्रिंशांशंयथाक्रमम् । संपूर्यकाचपात्रेषु स्थापयेत्सुदृढंयथा ॥
पूर्वोक्तकाचावरण लोहनाळस्यतंत्रिभिः । शक्तिपूरकपात्रादाहृत्यशक्तिं यथाविधि ॥
पात्रस्थद्रवपात्रेषुसम्यक्पूरयितुंक्रमात् । एकैकनाळेचत्वारितंत्र्यस्संशोधितास्ततः ॥
काचचक्रमुखात्सम्यक्संधार्याथयथाविधि । पूर्वोक्तपात्रान्तरस्थ काचपात्रेषुद्रावके ॥२३३०॥
संपूर्यपश्चात्तत्पात्रमूलात्तंत्रीद्वयंक्रमात् । शक्तिमाकर्षितुंबाह्येकीलैस्संयोजयेद्दृढम् ॥
पुनस्तत्कीलकाभ्यांतत्तंत्रीद्वयम् ऋजुर्यथा । समाहृत्यातिसरळात्काचकंकुरयोगतः ॥
प्रादक्षिण्यक्रमाद्याने धूमोद्गमपुरोभुवि । स्थितभुग्युकलोहस्यनाळान्तर्गततंत्रिभिः ॥



संधार्यविधिवत्पश्चात्प्रतिधूमोद्गमान्तरे । स्थितविद्युद्घर्षकमणिकीलकेषुयथाक्रमम् ॥
शक्तिंसंयोजयेत्ताभ्यांसप्रमाणंयथोचितम् । एवंधूमोद्गमनाळस्तंभस्थेचयथाविधि ॥२३३५॥
उक्तविद्युद्घर्षकमणिकीलकैस्सन्नियोजयेत् । एतेनसर्वत्रविद्युद्व्याप्तिस्स्याद्व्योमयानके ॥
तस्माद्विद्युद्यंत्रमेवम् कृत्वाशास्त्रानुसारतः । वामभागेविमानस्यस्थापयेत्सुदृढंयथा ॥इत्यादि॥

॥ अथ वातप्रसारणयंत्रनिर्णयः ॥

उक्तंहि क्रियासारे–

विमानोत्क्षेपणार्थायखपथे शास्त्रतःक्रमात् । वातप्रसारणंनाम यंत्रंशास्त्रेषुवर्णितम् ॥
इत्युक्तत्वाद्यंत्रमद्यसंग्रहेणनिरूप्यते । एतद्यंत्रम् वातमित्रलोहादेवप्रकल्पयेत् ॥
अन्यथायदिकुर्वीत तत्क्षणान्नाशमेधते ॥

॥ वातमित्रलोहमुक्तंलोहतंत्रे ॥

रसांजनिकभागांशा स्त्रयोदशतथैवहि । प्रभंजनस्यभागास्तु सप्तविंशदितीरिताः ॥२३४१॥
परांकुशस्यभागास्सप्तत्रिंशदितिकीर्तिताः । एतान्सर्पास्यमूषायां तत्तद्भागानुसारतः ॥
संपूर्यविधिवच्चक्रमुखकुंडेयथाविधि । संस्थाप्यपश्चाद्वारणास्य भस्त्राद्वेगेनशास्त्रतः ॥
ध्मनेत्षोडशोत्तर द्विशतकक्ष्योष्णमानतः । समीकरणयंत्रेथ तद्रसंपरिपूरयेत् ॥
एवंकृते वातमित्रलोहंभवतिनान्यथा । एतेनैवहिलोहेनकुर्याद्यंत्राणि शास्त्रतः ॥२३४५॥
आदौपीठस्ततोनाळस्तंभयंत्रस्तथैवच । वातप्रपूरकचक्रकीलकानिततःपरम् ॥
वाताकर्षण भस्त्रिकामुखयंत्रमतस्तथा । मुखसंकोचनविकासन कीलकौतदनन्तरम् ॥
सकीलकयातायातनाळश्चैवतथैवहि । यंत्राणांकवचम् तद्वद्वातस्तंभस्तथैवहि ॥
वातोद्गमाख्यनाळश्च भस्त्रिकोन्मुखमेवच । तथैववातपूरक कीलकानिततःपरम् ॥
वातनिरसन पंककीलकानीतिद्वादश । एतानियंत्रस्यांगानीति वर्णितानियथाक्रमम् ॥

॥ अथ पीठनिर्णयः ॥

षड्वितस्त्यायामकंच गात्रमेकवितस्तिकम् । चतुरश्रंवर्तुलंवापीटम् कुर्याद्यथाविधि ॥२३५१॥
त्रिचक्रनाळस्तंभसंस्थापनार्थंयथाविधि । कुर्यात्केंद्रद्वयम् पीठदक्षिणोत्तरयोःक्रमात् ॥

॥ त्रिचक्रनाळस्तंभमुक्तं यानबिंदौ ॥

वितस्तित्रयमायामौ त्रिनस्त्यष्टकमुन्नतौ । नाळस्तंभौकल्पयित्वा केंद्रयोरुभयोःक्रमात् ॥
संस्थापयेत्ततो नाळस्तंभयोर्मूलतःक्रमात् । कल्पयेदावृत्तकीलरंध्राणित्रीण्यथाविधि ॥
तेषुसंधारयेत्पश्चात्क्रमात्तत्कीलकान्दृढम् ॥

॥ तदुक्तंयानबिंदौ ॥

वितस्त्यैकायामयुक्तम् वितस्तिद्वयमुन्नतम् । सीत्कारीनाळवत्कृत्वा योचयेत्स्तंभरंध्रके ॥
चक्राणिकारयेत्त्रीणि वितस्त्यायामतस्ततः । दंतैःक्रकचवत्सम्यग्युक्तानि सुदृढान्यथा ॥
अनुलोमविलोमाभ्यामूर्ध्वाधोगमनंयथा । तथानाळान्तरेसम्यग्योजयेत्कीलकैस्सह ॥
वातपूरकनाळंतुचक्रमध्ये निवेशयेत् । कीलचंक्रमणाच्चक्रभ्रमणंभवतिस्वतः ॥
वातपूरकनाळस्य तेनसंचलनंभवेत् । ऊर्ध्वाधोगमनान्नाळे वेगाद्वायुंप्रकर्षति ॥२३६०॥
स्तंभद्वयस्यमूलाग्रात्पूर्वपश्चिमपार्श्वयोः । वातपूरकचक्रकीलकान्येवंनियोजयेत् ॥
वाताकर्षणभस्त्रिकामुखयंत्राण्यतःपरम् । वातपूरकचक्रकीलेभ्यस्संधारयेत्क्रमात् ॥

॥ भस्त्रिकामुखयंत्रमुक्तंबुडिलेन ॥

चक्रकंठमृगचर्मसमाहृत्ययथाविधि । संशोध्यपुत्रजीविक तैलेनाथयथाक्रमम् ॥
पाचयेत्त्रिदिनंपश्चात्क्षाळयेच्छुद्धवारिणा । गजदन्तिकतैलेनलेपयित्वामुहुर्मुहुः ॥
आतपेस्थापयेत्पंचवासराणिततःपरम् । षड्वितस्तिप्रमाणेनपश्चाद्यंत्रंप्रकल्पयेत् ॥२३६५॥
यंत्रमूलस्यविस्तारो वितस्तित्रयमुच्यते । तन्मध्यदेशविस्तारो वितस्तीनांचतुर्भवेत् ॥
तदंत्यदेशविस्तारो वितस्त्यैकमितीरितम् । भस्त्रिकामुखदेशेथ संकोचनविकासकम् ॥
अनुलोमविलोमाभ्यां स्थापयेत्कीलकद्वयम् । कीलकद्वयभ्रामण्याद्यातायातंयथाभवेत् ॥
संस्थापयेदेकदंडमेतन्मध्येतथाक्रमात् । वेगात्संचालनम् तद्वत्स्तंभनंचतथैवहि ॥
यथाभवेत्तथाकर्तुं स्थापयेत्कीलकद्वयम् । कीलकभ्रमणाद्यातायातदंडप्रचालनम् ॥२३७०॥
भवेत्तद्वेगतस्सम्यग्भस्त्रिकामुखचालनम् । वाताकर्षणनाळस्य यातायातमपिक्रमात् ॥
भस्त्रिकामुखवाताकर्षणनाळप्रकर्षणात् । प्रभवेद्वेगतोवाताकर्षणंतन्मुखांतरात् ॥



एवंत्रिचक्रनाळस्तंभेषुवातापकर्षणम् । यथाभवेत्तथासर्वकीलकानियथाक्रमम् ॥
संधारयेद्विशेषेण तत्तत्स्थानेषुशास्त्रतः । त्रिंशत्कक्ष्योष्णवेगेन कीलकानांपरिभ्रमः ॥२३३५॥
त्रिचक्रनाळस्तंभेषुयथाभवतितत्क्षणात् । क्रमात्संजायते वायुरंतर्नाळात्स्वभावतः ॥
शतप्रेंखणमानेनतथैवहिविशेषतः । भस्त्रिकामुखयंत्रेभ्यश्चापिवायुस्स्वभावतः ॥
जायतेद्विसहस्रप्रेंकणमानेननिर्मलः । क्रमादेतद्वायुवेगादपियानःप्रधावति ॥
तस्मात्प्रकल्प्यविधिवद्यंत्राणिद्वादशक्रमात् । विमानस्यचतुर्दिक्षुवातोद्गमपुरोभुवि ॥
एकैकपार्श्वेयंत्राणित्रीणित्रीणिनियोजयेत् । कुर्यादावरणंतेषांतत्तन्मानानुसारतः ॥२३४०॥
वितस्तित्रयमायामम् वितस्तिद्वादशोन्नतम् । यथाभवेत्तथानाळस्तम्भान्द्वादशकल्पयेत् ॥
पूर्वोक्तयंत्रावरणोर्ध्वप्रदेशेपृथक्पृथक् । वेगाद्वातोत्क्षेपणार्थम् स्तंभान्संस्थापयेद्दृढम् ॥
षट्शतोत्तरद्विसहस्रप्रेंकणप्रमाणतः । एकैकस्तंभतोवायुरूर्ध्वंगच्छतिवेगतः ॥
कालानुसारतोवायुर्यावदपेक्षितंभवेत् । तावदेवगृहीतंस्यात्प्रतितंत्रमुखांतरात् ॥
तस्मात्पृथक्पृथग्यंत्राणीतिशास्त्रेणवर्णितम् । विमानस्योर्ध्वगमनमेतेनापिभविष्यति ॥२३४५॥
वायूत्पत्तिक्रमंव्यष्ट्यायंत्रैरेवंनिरूपितम् । समष्ट्यावातमाहर्तुम् बृहत्स्तंभंप्रचक्षते ॥
चतुर्वितस्त्यायामम् त्रिंशद्वितस्त्युन्नतंतथा । वातोद्गमनाळस्तंभम् कृत्वापश्चाद्यथाविधि ॥
यंत्राणांमध्यकेन्द्रेथ स्थापयेत्सुदृढंयथा । भस्त्रिकोन्मुखयंत्राणि स्तंभमूलेनियोजयेत् ॥
यंत्राणांवातमाकृष्य स्तंभेपूरयितुंक्रमात् । यंत्रादिस्तंभमूलान्तम् तत्तद्रेखानुसारतः ॥
वाताकर्षणनाळानि समाहृत्ययथाविधि । स्तंभमूलांतरे सम्यक्संधार्याथयथाक्रमम् ॥२३५०॥
वातपूरककीलानितत्तन्नाळमुखांतरे । संयोज्यविधिवत्पश्चान्नाळस्तंभमुखांतरे ॥
अष्टांगुलायाममुखबिलंकृत्वायथाविधि । तस्योपरियथाशास्त्रम् वितस्त्यैकोन्नतंतथा ॥
वितस्तित्रयमायामम् मुखपात्रंनियोजयेत् । एतत्पात्राद्बहिर्याति वातस्तंभान्तरेस्थितः ॥
वायुर्वेगाद्विशेषेण तरंगाकारवत्स्वतः । पश्चाद्धूमोद्गमयंत्रस्थितधूमप्रसारणम् ॥
वातप्रसारणंयंत्रैस्तद्वदेवयथाविधि । तद्यंत्रस्थितवातस्यक्रमाद्धूमोद्गमेयथा ॥२३५५॥
भवेत्प्रवेशस्सरळात्तथाशास्त्रविधानतः । त्रिचक्रनाळकीलांश्चसंधार्याथयथाक्रमम् ॥
तत्कीलकैर्यथाकामम् धूमंवावायुमेववा । समाकृष्याथविधिवत्तत्तत्कालानुसारतः ॥
उपयोक्तुंभवेत्सम्यग्यथेष्टंसप्रमाणतः । एतद्यंत्रस्यविधिवत्चतुर्दिक्षुयथाक्रमम् ॥

वातनिरसनपंकचक्राणिस्थापयेदथ । एतच्चक्राणिवेगेनभ्रामयेद्यदिकीलकैः ॥
वायुंनिराकृत्यपश्चात्व्योमयानःप्रधावति । तेनसर्वत्रवेगेन निरातंकंयथातथा ॥२३६०॥

॥ अथ विमानावरणनिर्णयः ॥

आवृत्यधूमोद्गमयंत्राणि कुड्यान्यथाविधि । विमानावरणंकर्तुं कुर्याच्छकुनवत्क्रमात् ॥
सुंदराख्यविमानस्यावरणंचयथाविधि । राजलोहेनैवकुर्यादन्यथानिष्फलंभवेत् ॥
पश्चादावरणंयावद्गृहसंख्याविधीयते । तावत्संख्यानुसारेणविभज्याथयथाक्रमम् ॥
कुर्याद्गृहाणिविधिवत्पूर्वोक्तशकुनेयथा । द्वात्रिंशदंगयंत्राणां स्थानानिचयथाक्रमम् ॥
चातुर्मुखौष्म्यकयंत्रस्थापनार्थंयथाविधि । तद्गृहाणांमध्यदेशेचतुरश्राकृतिर्यथा ॥२३६५॥
त्रिंशद्वितस्त्यायामप्राकणंपरिकल्पयेत् । अत्रैवस्थापयेत्सम्यक्चातुर्मुखौष्म्ययंत्रकम् ॥

॥ एतदुक्तंयंत्रसर्वस्वे ॥

चातुर्मुखौष्म्ययंत्ररचनांकुंडोदरेणहि । कर्तव्यमितिशास्त्रेषुप्रवदन्तिमनीषिणः ॥

॥ कुंडोदरलोहमुक्तं लोहसर्वस्वे ॥

सोमकंचुकशुंडाललोहत्रयंविशोधितम् । क्रमात्त्रिंशत्पंचचत्वारिंशद्विंशांशतःक्रमात ॥
संपूर्यपद्ममूषायांकुंडेभस्त्रमुखाभिधे । संस्थाप्यवासुकीभस्त्रात्सम्यग्वेगाद्यथाविधि ॥
षोडशोत्तरसप्तशतोष्णकक्ष्यप्रमाणतः । आनेत्रांतम् गालयित्वायंत्रेसंपूरयेच्छनैः ॥२३७०॥
एवंकृतेनीलवर्णं सुसूक्ष्मम् भारवर्जितम् । द्विसहस्रकक्ष्योष्णवेगसहम् सुरुचंद्दडम् ॥
सहस्रप्रशतघ्नीभिरच्छेद्यम् चातिशीतळम् । भवेत्कुंडोदरंनामलोहम् कृतकवर्गजम् ॥
एतल्लोहेनविधिवत्कुर्याद्यंत्रम् मनोहरम् । एतदौष्म्यकयंत्राणाम् रचनादौविनिर्णितम् ॥

॥ अथ यंत्रांगनिर्णयः ॥

आदौपीठःतथाधूमपूरकुंडस्तथैवहि । जलकोशस्ततोवह्निकोशश्चैवततःपरम् ॥
गोपुरावरणंपश्चाज्जलकोशोपरिक्रमात् । धूमप्रसारणस्तंभनाख्यचक्रद्वयंततः ॥२३७५॥
वातायनशलाकानिपद्मचक्राण्यतःक्रमात् । आवृत्तचक्रकीलंच उष्णप्रमापकंततः ॥



वेगप्रमापकंतद्वत्कालप्रमापकंततः । रवप्रसारणकीलकनाळस्तथैवहि ॥
सांतर्दंडाघातनाळावातभस्त्राण्यतःपरम् । दीर्घशुंडालनाळाश्चताम्रनाळद्वयंततः ॥
वातविभजनचक्रकीलकान्यपिचक्रमात । एतान्यष्टादशांगानीत्याहुरौष्म्यकयंत्रके ॥
पंचविंशद्वितस्त्युन्नतंविस्तारेपिचसक्रमात् । तावत्प्रमाणतःपीठंकूर्माकारंप्रकल्पयेत् ॥२३८०॥
पीठादौरचयेदग्निकोशंपश्चाद्यथाविधि । जलकोशंपीठमध्ये कल्पयेदथशास्त्रतः ॥
धूमपूरककोशंच पीठांत्ये परिकल्पयेत् ॥

॥ कोशत्रयलक्षणमुक्तं बुडिलेन ॥

अथाग्निकोशनिर्णयः—

रविंमांचौळिकम् तिग्मंसमभागंयथाविधि । लोहेकुंडोदरेसम्यक् मेळयित्वाततःपरम् ॥
पट्टिकाःकारयेत्सम्यगंगुलत्रयगात्रतः । संगृह्यपट्टिकामेकां कोशकेंद्रोपरिक्रमात् ॥
पीठेसम्यक्परिस्तीर्यसमीकृत्ययथाविधि । तत्तत्केंद्रप्रमाणेनकोशान्सम्यक्प्रकल्पयेत् ॥
चतुर्वितस्त्यायामंचषड्वितस्त्युन्नतंतथा । पीठादिकेंद्रेविधिवदग्निकोशंप्रकल्पयेत् ॥२३८५॥
इंगालानथवाकाष्ठन्तस्मिन्संयोजनायहि । कोशस्यप्रथमेभागे कुल्याकारेणशास्त्रतः ॥
कल्पयेत्पट्टिकामंचमेकंकुंड्यत्रयान्वितम् । कोशद्वितीयभागेग्निज्वलनार्थंयथाविधि ॥
त्रिकोणाकारतःकुंडम् कारयेत्सप्रमाणतः । भस्मेंगालपतनार्थं तदधोभागतःक्रमात् ॥
कुंडमन्यत्प्रकर्तव्यम् शलाकाच्छादितंयथा । कुंडद्वयांतराळेतुपट्टिकांसप्रमाणतः ॥२३९०॥
संधारयेत्कीलकाद्यैश्चालनार्थंयथाभवेत् । प्रसारणोपसंहारौपट्टिकायायथाक्रमम् ॥
कीलसंचालनात्सम्यग्यथास्यात्सरळंयथा । अग्निज्वलनकुंडांतप्रदेशेथयथाविधि ॥
आदौमध्येतथाचांते चक्राणित्रीण्यथाक्रमम् । संयोजयेत्कीलकाद्यैः अनुलोमविलोमतः ॥
कीलसंचालनाच्चक्रभ्रमणरस्याद्यथातथा । अग्निज्वालोन्मुखम् कर्तुंप्रथमंचक्रमीरितम् ॥
मंदमध्यमगाढज्वालाप्रकाशार्थमेवहि । द्वितीयचक्रमित्याहुस्तृतीयंतुयथाक्रमम् ॥२३९५॥
समीकरणकार्यार्थं स्थापितंस्याद्यथाक्रमम । अग्निकोशोपरिपुनःनाळमेकंदृढंयथा ॥
स्थापयेत्पट्टिकामध्येततोनाळांतरेक्रमात् । प्रदक्षिणावृत्तचक्रतंत्रीस्संधारयेत्ततः ॥
नाळवत्पट्टिकांतस्योपर्याच्छाद्यप्रमाणतः । धूमाकर्षणनाळंचकल्पयित्वाततःपरम् ॥

अग्निकोशांतभागे संस्थापयित्वायथाविधि । पूर्वोक्तवक्रतंत्री मुखप्रदेशेनियोजयेत् ॥
अग्नेर्धूमम् समाहृत्यजलकोशेनियच्छति । अग्निकोशाज्जलकोशावरणांतंयथाविधि ॥२४००॥
जलनाळानिसर्वत्रयोजयेत्सप्तसंख्यया । जलकोशावरणदेशेसर्वत्रात्यंतवेगतः ॥
पंचसाहस्रलिंकोष्णव्याप्तिरेतैर्भवेत्क्रमात् । तेनततंजलंपश्चादौष्म्यधूमाकृतिंलभेत् ॥
जलकोशप्रमाणंतु वितस्त्यष्टकमुच्यते । त्रिचक्रकीलनाळानि जलकोशेयथाक्रमम् ॥
त्रीणिसंधारयेत्साम्यात्सुदृढंसरळंयथा । जलौष्म्यधूमबंधार्थं प्रथमंचक्रकीलकम् ॥
धूमराशिंकल्पयितुम् द्वितीयंचक्रमीरितम् । तत्पुरोभागस्थधूमकुंडकोशेतिवेगतः ॥२४०५॥
पूरणार्थंधूमराशेस्तृतीयम् चक्रमीरितम् । धूमपूरककोशषड्वितस्त्यायामसम्मितम् ॥
चतुर्वितस्त्युन्नतंस्यादितिशास्त्रविनिर्णयः । औष्म्यधूमंपूरयितुम् धूमकोशेयथाविधि ॥
चक्रकीलान्विशेषेण स्थापयेत्सप्रमाणतः । जलकोशोपरिततो गोपुराकारतःक्रमात् ॥
कुर्यादावरणंसम्यक् सुदृढंसरळंयथा । एतदावरणस्योद्घाटनेसंबंधनेपिच ॥
यथास्यात्सरळम् तद्वत्कीलकानिनियोजयेत् । धूमपूरककोशस्यपुरोभागेयथाविधि ॥२४१०॥
यथेष्टंधूमसंचोदनार्थंतद्बंधनायच । सरंध्रंपट्टिकाचक्रद्वयम् तत्रनियोजयेत् ॥
एतच्चक्रभ्रामणार्थं सरळंस्याद्यथातथा । संधारयेद्भ्रामणिककीलकान्सुदृढान्क्रमात् ॥
धूमपूरककुंडस्यपूर्वभागेततःपरम् । वातायनशलाकानष्टांगुलान्मानतस्ततः ॥
एकैकमेकांगुलप्रदेशेसंस्थापयेद्दृढम् । ततोयंत्रपुरोभागेमध्येचोर्ध्वेप्यधःक्रमात् ॥
पार्श्वयोरुभयोश्चैवयथाकालानुसारतः । सर्वत्रधूमोद्गमंचस्तंभनंचयथाभवेत् ॥२४१५॥
पद्मचक्राकारकीलान्तत्तत्स्थानेषुशास्त्रतः । द्वौद्वौसंधारयेत्सम्यक्पश्चात्तत्पृष्ठभागतः ॥
काष्ठप्रक्षेपणार्थाय इंगालान्वायथोचितम् । सार्धवितस्त्यायामेन बिलंकुर्याद्यथाविधि ॥
कवाटोद्घाटनार्थाय बिलद्वारस्यशास्त्रतः । यथास्यात्सरळंतद्वत्कीलकान्सन्नियोजयेत् ॥
उष्णप्रमापकंयंत्रम् तथावेगप्रमापकम् । दक्षिणोत्तरयोःपश्चात्तत्कीलस्ययथाक्रमम् ॥
मनुष्यवत्प्रवचनम् कुर्वंतंसुस्फुटंक्रमात् । कालप्रमापकंयंत्रम् तथातस्योर्ध्वभागके ॥२४२०॥
संस्थापयेद्दृढंपश्चाद्दक्षभागेतथैवहि । द्वादशोत्तरद्विशतयुतसहस्रसंख्यकाः ॥
यथाशब्दरवतरंगोत्पत्तिर्वेगतःक्रमात् । छोटिकावच्छिन्नकालेबहिर्यातितथास्थितम् ॥
रवप्रसारणंनामकीलनाळंनियोजयेत् । विमानस्यप्रसरणेस्तंभनेचतथैवहि ॥



वेगातिवेगापायेषुएतत्सांकेतकृद्भवेत् । स्तंभनादीन्पंचसंकेतान्निदर्शयितुंपुनः ॥
सकीलकानिविधिवन्मुखरंध्राणिपंचधा । रवप्रसारणेकृत्वास्थापयेत्कीलकानिहि ॥२४२५॥
एकैककीलभ्रमणादेकैकमुखरंध्रकः । एकैकसांकेतरवोवेगान्निस्सरतिक्रमात् ॥
सांकेतकस्वररवश्रवणादेवतत्क्षणात् । पूर्वोक्तपंचसंकेतान्स्तंभनाद्यायथाक्रमम् ॥
विज्ञायंतेविशेषेणरवभेदात्पृथक्पृथक् । एतद्यंत्रस्यविधिवत्पार्श्वयोरुभयोःक्रमात् ॥
षडंगुलायामयुतमुन्नतेतुयथाविधि । षड्विंशतिवितस्तीनांप्रमाणेनविनिर्मितौ ॥
आघातनाळौसुदृढौपश्चात्संधारयेत्ततः । पंचांगुलायामलोहदंडौनाळद्वयांतरे ॥२४३०॥
संधारयेद्यथाशास्त्रम् नाळमानानुसारतः । आदिमध्यावसानेषु नाळयोरुभयोःक्रमात् ॥
परिभ्रमणचक्रकीलकान्स्थयथाक्रमम् । संधारयेद्दृढंतेषांपरिभ्रमणतःक्रमात् ॥
नाळद्वयांतरेसम्यग्दंडाघातोभविष्यति । एतेनापिव्योमयानगमनंवेगतोभवेत् ॥
सकीलकवातभस्त्रिकांश्चवाताहतायहि । पूर्वोक्तनाळमुखयोस्सम्यक्संधारयेद्दृढम् ॥
तेननाळांतरेवाताघातश्चाप्यतिवेगतः । भवेत्तेनव्योमयानवेगंस्याद्द्विगुणंक्रमात् ॥२४४०॥
पश्चादौष्म्यधूमकोश चतुष्पार्श्वेष्वपिक्रमात् । यथावातोद्गमेयंत्रेशुंडालास्संप्रतिष्ठिताः ॥
तथैवावृत्तचक्रकीलकैःस्थापयेद्दृढम् । औष्म्यधूमंपूरयित्वा शुंडालेषुयथाविधि ॥
कीलकभ्रमणाद्यस्मिन्कस्मिन्वादिश्यथाक्रमम् । शुंडालसांकेतवशात्सरळंगमनंयथा ॥
भवेद्वेगेनयानस्य ततोर्ध्वमुखतःक्रमात् । स्तंभनेगमनेचैव अनुकूलंयथाभवेत् ॥
संधारयेद्भ्रामकचक्रकीलकान्यथाविधि । शुंडालस्यतिरोभावप्रकाशौचयथाभवेत् ॥२४४५॥
कीलकानितथातत्रसम्यक्संधारयेत्ततः । तृतीयवर्गताम्रस्यनाळद्वयंसुशोधितम् ॥
यंत्रस्याग्निजलधूमकोशादारभ्यशास्त्रतः । अत्युष्णवेगोपसंहारार्थं सर्वत्रपार्श्वयोः ॥
संवेष्ट्यविधिवत्पश्चात्कीलकैस्सुदृढंयथा । संधारयेत्ततोत्युष्णवेगम् नाळद्वयंग्रसेत् ॥
विमानस्यपुरोभागस्थितवायुविभंजने । वातविभजनचक्रकीलकान्यपिशास्त्रतः ॥
संस्थापयेद्यथाकालंवातसंख्यानुसारतः । एवंचातुर्मुखोष्म्यकयंत्रंकृत्वायथाविधि ॥२४५०॥
विमानमध्यप्रदेशेस्थापयेत्सुदृढंयथा । अधोभागस्थयंत्राणांवातधूमोष्म्यकैःक्रमात् ॥
विमानस्योर्ध्वगमनम् भवत्येवनसंशयः । पश्चाद्विमानगमने धूमादीनांयथाक्रमम् ॥
वेगप्रमाणंनिश्चित्यगणितागमतःक्रमात् । गमनेव्योमयानस्य वेगस्त्वत्रनिरूप्यते ॥

छोटिकावच्छिन्निकालेयंत्राद्धूमोद्गमात्स्वतः । लिंकानांद्विसहस्रंचशतंपश्चात्त्रयोदश ॥
एतत्प्रमाणतोधूमवेगस्संजायतेध्रुवम् । तथैववातप्रसारणयंत्रादपिचक्रमात् ॥२४५५॥
पंचशतोत्तरद्विसहस्र लिंकप्रमाणतः । छोटिकावच्छिन्नकालेवातवेगःप्रजायते ॥
तथैवनाळस्तंभाच्चलिंकानांषट्शतंक्रमात् । वायुवेगःस्वभावेनजायतेनात्रसंशयः ॥
एवंप्रकारतःपीठस्थाधोयंत्रैःपृथक्पृथक् । वातोष्म्यधूमवेगाश्चउत्पद्यंतेक्षणांतरात् ॥
एवमेवव्योमयानस्योर्ध्वभागेपिचक्रमात । चातुर्मुखोष्म्यकयंत्राच्चौष्म्यवेगस्स्वभावतः ॥
चतुश्शतोत्तरेत्रिसहस्रलिंकप्रमाणतः । छोटिकावच्छिन्नकालेजायतेनात्रसंशयः ॥२४६०॥
चातुर्मुखोष्म्यवेगाच्चवातधूमोष्म्यकैस्तथा । शुंडालैश्चतथाकीलकादिभिःप्रेरितंक्रमात् ॥
घटिकावच्छिन्नकालेयोजनानांचतुश्शतम् । विमानंवेगतोयातिनात्रकार्याविचारणा ॥
एवंसुंदरयानस्यत्वाकाररचनाविधिः । आलोड्यपूर्वशास्त्राणियथामतिनिरूपितम् ॥




॥ अथ रुक्मविमाननिर्णयः ॥

एवमुक्त्वासुंदराख्यविमानंशास्त्रतःक्रमात् । इदानींरुक्मविमानंसंग्रहात्संप्रचक्षते ॥२४६५॥
विमानबोधकपदद्वयमस्मिन्निरूपितम् । तत्रादिमपदाद्व्योमयाननामनिदर्शितम् ॥
समुच्चयार्थावबोधोद्वितीयपदतस्स्मृतः । एवंसामान्यतःप्रोक्तस्सूत्रार्थस्संग्रहेणतु ॥
इदानींतद्विशेषार्थःप्रोच्यतेशास्त्रतःक्रमात् । विमानोरुक्मवर्णत्वान्नाम्नारुक्मइतिरितः ॥
राजलोहादेवरुक्मविमानमपिकारयेत् । पाकभेदाद्राजलोहेरुक्मवर्णविकारता ॥
यथाभवेत्तथाकुर्याच्छास्त्रोक्तेनैवमार्गतः । अन्यथानिष्फलम् यातिनात्रकार्याविचारणा ॥



॥ उक्तंहियानबिंदौ ॥

आदौकृत्वास्वर्णवर्णं राजलोहस्यशास्त्रतः । पश्चादाकाररचनांकुर्याद्यानस्यचक्रमात् ॥

॥ वर्णस्वरूपमुक्तं वर्णसर्वस्वे ॥

प्राणक्षारचतुष्टयंचचणकम् आरण्यकंकोमलम् द्वात्रिंशच्छशकंदसत्वममलंअष्टादशांशंतथा ।
विंशच्छोधितनागमब्ध्युदितरेखामुखंषोडश पश्चान्माक्षिकषट्कदिव्यममलम् पंचाननंविंशतिः॥
पारंपंचदशाष्टविंशदमलंक्षारत्रयंविंशतिः व्योमंसप्तदशाष्टहंसगरदंपंचामृतंषोडश ।
एतान्द्रावकयंत्रकोशकुहरेसंपूर्यपश्चाद्यथाशास्त्रंद्रावकमाहरेद्द्विमुखरंध्राभ्यांयथापाकतः ॥
पश्चात्कुंडमुखांतरेसुविमलेतद्राजलोहंपुनः मूषायांपरिपूर्यतत्रविधिवत्संस्थाप्यभस्त्रामुखात् ।
संगाल्याष्टशतोष्णकक्ष्यरयतःसंगृह्यपश्चात्सुधीः यंत्रास्येवरगर्भमध्यकुहरेसंपूर्यसंशोधयेत् ॥
एवंकृत्वाराजलोहम् पश्चात्संग्राहयेद्यदि । शुद्धस्वर्णवदाभाति तल्लोहंसुदृढंमृदु ॥२४७५॥
एतेनैवप्रकर्तव्यम् विमानाकारमद्भुतम् । अत्यंतसुंदरम सर्वहर्षदंभवतिध्रुवम् ॥

॥ अथ पीठनिर्णयः ॥

पीठंरुक्मविमानस्य कूर्माकारंप्रकल्पयेत् । वितस्तिसहस्रायामम् गात्रमेकवितस्तिकम ॥
यथेष्टमथवाकुर्यात्सुदृढंसुमनोहरम । पीठाधोभागदेशेष्टदिक्षुपश्चाद्यथाक्रमम् ॥
वितस्तिद्वादशायामकेंद्रस्थानान्पृथक्पृथक् । गणितोक्तविधानेनकल्पयित्वायथाविधि ॥
एकैककेंद्रस्थानेच चंचूपुटमुखान्दृढान् । कीलकान्स्थापयेत्सम्यग्दृढमावृत्तकीलकैः ॥
पश्चादयःपिंडचक्राण्यष्टकेंद्रेषुयुग्मतः । संयोजयेद्यथैकस्मिन्प्रभवेदेकसंस्थितिः ॥२४८१॥

॥ अयश्चक्रनिर्णयः ॥

अयश्चक्रपिंडलक्षणं उक्तं लल्लेन–

वितस्तिद्वादशायामम् कंबुष्टाष्टकभारकम् । वर्तुलाकारतःकुर्यात्पिष्टपेषणयंत्रवत । इत्यादि॥
पश्चाच्चक्राणिविधिवच्चंचूपुटमुखांतरे । सम्यक्संधारयेद्धृढमष्टदिक्षुपृथक्पृथक् ॥
एकैकायश्चक्रपिंडमूलकेंद्राद्यथाविधि । आविद्युत्कीलपर्यंतम् नाळात्वरणतःक्रमात् ॥
संधारयेच्छृंखलतंत्रयस्सर्वत्रकीलकैः । पूर्वोक्तायश्चक्रपिंडस्थानपार्श्वेपृथक्पुथक् ॥२४८५॥

॥ बटिणिकास्तंभनिर्णयः ॥

वितस्त्यैकायामयुक्तान् चतुर्वितस्तिरुन्नतान् । स्तंभान्संस्थापयेत्तेषुकोलकान्तंत्रिवाहकान् ॥
संधारयेद्दृढंपश्चाच्छक्तिनाळावधिक्रमात् । अष्टांगुलायामचक्राण्युभयोःपार्श्वयोर्दृढम् ॥
सतंत्रीणियथाशास्त्रम् मध्यभागेच योजयेत् । आविद्युन्नाळमारभ्यचक्राण्यावृत्यचक्रमात् ॥
आहत्यशृंखलाकारतंत्रीरस्तंभांतरेदृढम् । अंतःकीलमुखेसम्यग्योजयेत्सरळंयथा ॥
पश्चाच्चषकवत्तस्योपरिकीलसमन्वितम् । संस्थापयेद्घटनिकामंतरावृत्तकुट्मलां ॥२४९०॥
तस्मिन्नंगुष्ठविक्षेपादंतरसंचलनंयथा । तथाभ्रामकचक्राणिकीलकैस्सहयोजयेत् ॥
यथाबटणिकोपर्यंगुष्ठविक्षेपणंभवेत् । तत्क्षणात्स्तंभांतरस्थचक्रकीलान्यथाक्रमम् ॥
परिभ्रमंतिवेगेन विद्युत्संयोजनात्स्वतः । पुनर्विद्युन्नाळमुखाच्चक्रकीलान्यथाक्रमम् ॥
एतत्प्रेक्षणतस्सम्यग्भ्राम्यंते शक्तियोगतः । एतेनपंचसाहस्रलिंकवेगःप्रजायते ॥

॥ अथ विमानोड्डयनादिनिर्णयः ॥

एतच्छक्त्याकर्षणेन पीठाधस्ताद्यथाक्रमम् । आकुंचितान्ययःपिंडचक्राणिप्रभवंतिहि ॥
तच्चक्रैस्ताडितःपीठो ऊर्ध्वंगच्छतिखेक्रमात् । पीठोपरिस्थचक्रस्तंभस्थकीलप्रचालनात् ॥
अत्यंतवेगतस्तंभभ्रमणंप्रभवेत्क्रमात् । तेनोर्ध्वगमनंवेगात्स्तंभानांभवतिस्वतः ॥
आरोहणावरोहणक्रमात्सव्यापसव्यतः । शक्तिसंयोजनात्सम्यग्भ्राम्यंत्येवमुहुर्मुहुः ॥
चक्रताडनतोधस्तात् स्तंभाकर्षणतोपरि । उड्डीयोड्डीयवेगेनविमानंखपथेक्रमात् ॥
यात्यूर्ध्वंसरळात्सम्यगतिगंभीरतस्स्वयम् । एतेनोर्ध्वंविमानस्यखपथारोहणंभवेत् ॥२५००॥

॥ अथ गमनोपयुक्त विद्युन्नाळचक्राणि ॥

पीठस्योपरिशास्त्रोक्तसंख्यारेखानुसारतः । विहायैकवितस्त्यंतरायम् नाळद्वयांतरे ॥
विद्युन्नाळानिविधिवत्सचक्राणियथाक्रमम् । संधारयेद्विशेषेण ओतप्रोतात्मनाततः ॥
एकैकविद्युन्नाळस्यपार्श्वयोरुभयोरपि । वितस्तिद्वयमायामम् वितस्त्येकोन्नतंतथा ॥
कल्पयित्वादंतचक्राण्यथतेषांपरस्परम् । संमेळयित्वाविधिवत्कीलैस्संभ्रामकैस्तथा ॥
विद्युत्तंत्रीस्समाहृत्य एतत्कीलकमार्गतः । प्रतिचक्रोपरियथासम्यक्संधारयेत्क्रमात् ॥२५०५॥



प्रतिविद्युन्नाळमूलेविद्युत्संचोदनायहि । वितस्तित्रयमायमम् वितस्तित्रयमुन्नतम् ॥
एकैकचक्रंसरळम् स्थापयेत्तंत्रिसंयुतम् । विहायविंशन्नाळानि मध्येस्तंभंनियोजयेत् ॥

॥ उक्तंहि नारायणेन ॥

चतुर्वितस्त्यायामम् च तावदेवोन्नतंतथा । स्तंभंकृत्वाथतन्मध्ये वितस्तिद्वयमानतः ॥
आस्यवत्कल्पयेत्सम्यक्त्रिधातस्मिन्यथाविधि । विभज्यसमभागेनपश्चात्स्थानत्रयेक्रमात् ॥
कीलकानियथाशास्त्रम् तत्रतत्रनियोजयेत् । चक्रषट्कसमायुक्तम् काचकंकुभिरन्वितम् ॥
सनाळकंचुकावृत्तम् तंत्रीद्वयसमन्वितम् । विद्युच्छक्त्याकर्षणार्थं स्थापयेत्कीलकद्वयम् ॥
स्तंभास्यप्रथमेभागे एवंसंधार्यकीलके । द्वितीयभागे तच्छक्तिप्रेषणार्थंयथाविधि ॥
चक्रपंचकसंयुक्तम् काचावरणसंयुतम् । नाळद्वयेनसंयुक्तम् तंत्रीद्वयसमन्वितम् ॥
शक्तिप्रवाहतंत्र्योर्मूलप्रदेशेत्रिदंडकम् । संप्रेषितांतश्चषकम् वेगिनीतैलसंयुतम् ॥
पंचास्यकीलकंसम्यक्स्थापयेत्सुदृढंयथा । शक्तिप्रवाहसंघट्टनेनवेगाद्यथाक्रमम् ॥२५१५॥
तत्रत्यचक्रभ्रमणम् भवेद्वेगाद्यथाक्रमात् । तथासंधारयेत्कीलानितृतीयास्येयथाक्रमम् ॥
प्रथमास्यंसमारभ्यतृतीयास्यांतरावधि । अन्योन्यसंसर्गचक्रकीलकैस्सरळंयथा ॥
संधार्यपश्चात्स्तंभास्यपुरोभागे दृढंयथा । बृहच्चक्रंचविधिवत्स्थापयेद्गुंभकीलकैः ॥
एवंप्रतिस्तंभमूलेक्रमात्सम्यक्पृथक्पृथक् । चक्राणिस्थापयेत्तेषामुपरिष्टात्समंततः ॥
पट्टिकांयोजयेत्सम्यक्चतुरंगुलविस्तृताम् । संसर्गकीलादाविद्युद्यंत्रमुखावधि ॥२५२०॥
तंत्रीद्वयंसमाहृत्य विद्युदाकर्षणायहि । शक्तिप्रवाहनाळस्यमुखकीलेनियोजयेत् ॥
तत्कीलभ्रमणाच्छक्तिस्तंत्रीमार्गानुसारतः । संसर्गचक्रकीलकमार्गद्वारायथाक्रमम् ॥
समागम्यातिवेगेनस्तंभमूलस्थकीलकम् । प्रविश्यतत्कीलकद्वाराचक्राणिभ्रमंतिहि ॥
बृहच्चक्रभ्रमणतोसंधिचक्राण्यपिक्रमात् । परस्परंभ्रामयंतिनाळदंडेषुवेगतः ॥
पंचास्यकीलकेसम्यक्शक्तिरसंप्रविशेत्क्रमात् । अंतश्चषकसंविष्टवेगिनीतैलतःपुनः ॥२५२५॥
तच्छक्तिर्विस्तृतावेगात्प्रतिनाळद्वयांतरात् । सर्वत्रव्याप्यदंडस्थसर्वचक्राण्यथाक्रमम् ॥
भ्रामयत्यतिवेगेनशक्तिचालनचक्रवत् । एतेनपंचविंशत्सहस्रलिंकप्रमाणतः ॥
वेगस्संजायते तस्माद्विमानंघटिकांतरे । पंचोत्तरशतक्रोशपर्यंतंधावतिदृढम् ॥

एवंकृत्वाविमानस्यगमनाभिमुखंक्रमात् । दिशामभिमुखीकर्तुम् कीलकान्युच्यतेधुना ॥
ईशान्यादिक्रमात्पीठस्याष्टदिक्षुयथाक्रमम् । वितस्तीनांपंचदशोन्नतमायामतस्तथा ॥२५३०॥
वितस्तिद्वयमानंचस्तंभंकुर्याद्दृढंयथा । वितस्तिदशकादेकस्तंभवत्संख्ययाक्रमात् ॥
संगुण्यपीठदेशेथ यावत्संख्याभविष्यति । तावत्संख्यानुसारेणस्तंभान्पूर्वोक्तवद्दृढान् ॥
कल्पयित्वाथसंस्थाप्यपंचकंठोज्वलान्वितान् । अभ्रकेणकृतान्पश्चात्तेषामुपरिशास्त्रतः ॥
यानांगेसर्वस्थानानिगृहकुड्यादिकानपि । पूर्वोक्तरुरुकव्योमयानवत्कारयेत्क्रमात् ॥
गृहोपयुक्तसामग्रीश्चाभ्रकादेवकारयेत् । अन्यथानिष्फलमितिप्रवदंतिमनीषिणः ॥२५३५॥

॥ तदुक्तं क्रियारारे ॥

शारग्रामंपंचविंशत्तथैवक्ष्विकास्त्वंत्रिंशतिश्चाष्टविंशत् । गुंजाक्षारम् टंकणंद्वादशांशम्
रौद्रीमूलंचाष्टभागंसमग्रम् ॥
चांद्रीपुष्पक्षारमेकांशकंचशून्यंपश्चात्पाकशुद्धंशतांशम् । संपूर्यैतान्कूर्ममूषामुखेथपाद्मे-
कुंडेस्थाप्यभस्त्रामुखेन ॥
संगाल्याष्टशतकक्ष्योष्णवेगात्पश्चाद्यंत्रेपूरयेद्वेगतोथ ॥ इत्यादि ॥
एवंकृतेभ्रकश्शुद्धोसर्वकार्यक्षमोदृढः । अत्यंतमृदुळश्चित्रवर्णैश्चसुविराजितः ॥
हर्षप्रदश्चसर्वेषांप्रभवेन्नात्रसंशयः । स्तंभकुड्यगृहादीनिएतेनैवप्रकल्पयेत् ॥२५४०॥
कल्पयित्वाव्योमयानेगृहाद्याश्शास्त्रतस्ततः । व्योमयानंप्रेरयितुम् सर्वदिक्षुयथोचितम् ॥
परिवर्तनावर्तनकीलकानियथाक्रमम् । यानादिमध्यांत्यभागेष्वष्टदिक्षुयथाक्रमम् ॥
तत्तत्स्थानेषुविधिवत्स्थापयेत्सुदृढंयथा ॥

॥ परिवर्तनापवर्तनकीलकस्वरूपमुक्तंलल्लेन ॥

यानसंप्रेषणार्थायमार्गान्मार्गांतरंप्रति । परिवर्तनावर्तनकीलकानियथाक्रमम् ॥
संधारयेदष्टदिक्षुविमानस्यदृढंयथा । पूर्वापरविभागेनकर्तव्यम् कीलकद्वयम् ॥२५४५॥
उभयोर्मेळनंपश्चात्कुर्यात्सम्यक्दृढंयथा । व्योमयानंप्रेरयितुम् भवेत्तेनयथोचितम् ॥
सव्यापसव्यतस्सम्यग्विमानम् वेगतस्स्वयम् । तत्कीलकभ्रमणतो यस्माद्धावत्यहर्निशम् ॥
तस्मात्परिवर्तनावर्तनकीलमितीरितम् । परिवर्तनावर्तनार्थंपश्चात्तस्ययथाविधि ॥



पीठमूलेचतुर्दिक्ष्वर्धचंद्राकारतःक्रमात् । वितस्तिद्वयमायामम् वितस्तिद्वयमुन्नतम् ॥
नाळंकृत्वाथविधिवत्तन्मध्येस्थापयेत्क्रमात् । चतुरंगुलायामलोहशलाकान्मृदुळान्ततः ॥
नाळांतरस्थोभयपार्श्वयोस्संयोजयेत्ततः । वितस्त्यायामतस्तद्वद्वितस्त्युन्नतमेवच ॥२५५१॥
कृत्वासरळचक्राणितेषुसंधारयेत्क्रमात् । मृदुकंकुरतंत्र्याथतेषामुपरिशास्त्रतः ॥
संवेष्टयेदासमंतात्सरळंचदृढंयथा । एवंक्रमेणविधिवच्चतुर्दिक्षुयथाक्रमम् ॥
अर्धचंद्राकारनाळान्पीठस्यस्थापयेद्दृढम् । ततोनाळस्थचक्राणांभ्रमणायातिवेगतः ॥
आदिमध्यावसानेषुनाळानांसप्रमाणतः । बृहच्चक्राणिविधिवत्स्थापयेत्सुदृढंयथा ॥२५६०॥
नाळाग्रस्थबृहच्चक्रभ्रमणाद्वेगतःक्रमात् । नाळांतर्गतचक्राणिभ्रामयंतिपरस्परम् ॥
तद्वेगेनाथतत्कीलशंकवश्चयथाक्रमम् । पीठेमध्येतथाचांत्येपंथानाभिमुखंयथा ॥
तथावृत्यस्वयंपश्चाद्यानमावर्तयिष्यति । तस्माच्चपथिवेगेनविमानोधावतिस्वयम् ॥
तस्मादेतत्कीलकानिस्थापयेदितिवर्णितम् । शुद्धातपाशनंलोहम् संगृह्यविधिवत्ततः ॥
पट्टिकांकारयित्वाथ कुट्टिणीयंत्रतःक्रमात् । वितस्तिद्वयमायामम् वितस्तिद्वयविस्तृतम् ॥
अंगुलत्रयगात्रंच चतुरश्रमथापिवा । वर्तुलंकारयेत्पीठम् तस्योपरियथाक्रमम् ॥२५६६॥
वितस्त्येकायाममात्रम् वितस्तिपंचकोन्नतम् । नाळत्रयंस्थापितव्यम् दमनीदंडवत्क्रमात् ॥
त्रिभुजाकारवत्पश्चात्तस्याधरसुदृढंयथा । विस्तृतास्यंकाचमयंस्थापयेत्कुट्टिकात्रयम् ॥
एकैकनाळांतरेचैकैकंसुदृढंयथा । तेषुसंपूरयेत्सोमद्रावकंप्रस्थमात्रकम् ॥
एकविंशोत्तरशतसंख्याकानद्रवशोधितान् । ग्रीष्मोपसंहारमणीनैकैकंतेषुयोजयेत् ॥२५७०॥
पश्चाद्वितस्तिदशकायामंवर्तुलतःक्रमात् । छत्रीवत्कल्पयेत्पूर्वोक्तलोहेनैवशास्त्रतः ॥
त्रिदंडनाळोपरिष्टाद्यथासंधारितुंभवेत् । तथाप्रदक्षिणावर्तकीलकान्सुदृढान्क्रमात् ॥
सम्यक्प्रकल्पयेत्त्रीणिछत्र्यांसम्यग्दृढंयथा । प्रदक्षिणावर्तकीलकोपर्यपियथाक्रमम् ॥
वितस्त्यर्धप्रमाणेनकल्पयेत्तस्यशास्त्रतः । तस्योपरियथाकामम् वितस्तित्रयगात्रकम् ॥
कुर्यात्त्रिकलशान्स्थाल्याकारान्यथाविधि । संधारयित्वातन्मध्येवर्तुलांश्चालपट्टिकान् ॥
संस्थापयेत्तदुपरिशुद्धंशीतप्रसारिणम् । पंचाशीत्युत्तरशतसंख्याकंयन्मणित्रयम् ॥२५७६॥
संस्थाप्यविधिवत्पश्चात्तेषामुपर्यथाक्रमम् । बृणिकाभ्रकचक्राणि कीलकैस्सहयोजयेत् ॥
चंद्रिकातूलिकात्तेषाम् कुर्यादावरणंक्रमात् । तस्योपरिष्टान्मंजूषद्रवपात्रंनियोजयेत् ॥

आतपोष्णोपसंहारमणितस्मिन्नियोजयेत् । तथैवोष्मापहारेकाभ्रकचक्राणियथाविधि ॥
प्रदक्षिणावर्तदंतयुक्तान्यतिदृढान्यथ । भ्रामणीदंडकीलकसंयुक्तानिपुरोभुवि ॥२५८०॥
संस्थाप्यवेगात्तत्कीलभ्रमणार्थंपुनःक्रमात् । त्रिचक्रकीलकंतस्मिन्योजयेत्सरळंयथा ॥
तच्चालनाद्भवेच्छत्रीभ्रमणंवेगतःक्रमात् । तेनातपोष्णभ्रमणम् भवेच्छत्र्यनुसारतः ॥
पश्चादुष्णापहारकाभ्रकचक्राण्यथाक्रमम् । संग्राहयेदातपोष्ण शक्तिंवेगात्स्वशक्तितः ॥
आतपोष्णोपसंहारमणिःपश्चात्स्वतेजसा । तच्छक्तिमपहृत्यस्वमुखतःपिबतिक्रमात् ॥
मंजूषद्रावकंपश्चात्तच्छक्तिंवेगतःपुनः । समाहृत्यातिशीतस्वभावंतस्यप्रयच्छति ॥२५८५॥
शीतत्वंप्राप्यतच्छक्तिःपश्चाद्वेगात्स्वभावतः । वायुमंडलमासाद्यतत्रैवलयमेधते ॥
तस्माद्यानस्यातपोष्णनिवृत्तिःप्रभवेत्क्रमात् । तेनात्यंतसुखंयानयंतृणांप्रभवेत्ततः ॥
स्थापयेदातपोष्णोपहारयंत्रंयथाविधि । अन्यथायंतृणांकष्टम् भवत्येवनसंशयः ॥
एवमुक्त्वातपोष्णोपहारयंत्रंयथाविधि । यानतृतीयावरणरचनाविधिरुच्यते ॥
प्रथमावरणेपूर्वं द्वितीयावरणस्यहि । स्थापनार्थंयथासंधानकीलकानियथाविधि ॥२५९०॥
स्थापितानितथैवास्मिन्द्वितीयावरणेपिच । तृतीयावरणस्थापनार्थंचैवयथाक्रमम् ॥
संधारयेत्कीलकानिसर्वतस्सुदृढान्यथा । तृतीयावरणपीठाधःप्रदेशेपियथाक्रमम् ॥
ऊर्ध्वाधोभागकीलानांयथासंयोजनंभवेत् । कीलकानितथासम्यक्सुदृढम् कल्पयेत्क्रमात् ॥
द्वितीयावरणात्पंचवितस्त्यूनम् यथादृढम् । चतुरश्रंवर्तुलंवातृतीयावरणस्यच ॥
पीठंकृत्वातदुपरिद्वितीयावरणेयथा । तथैवात्रापिकर्तव्यंगृहकुड्यादिकंक्रमात् ॥२५९५॥
तृतीयावरणस्येशान्यदिग्भागेयथाविधि । विद्युद्यंत्रस्थापनार्थं चतुरश्रंसकीलकम् ॥
सोमांकलोहेनक्रमात्कुर्यादावरणंदृढम् । तस्मिन्संस्थापयेद्विद्युद्यंत्रम् शास्त्रोक्तवर्त्मना ॥

॥ सोमांकलोहमुक्तं लोहतंत्रे ॥

नागंपंचास्यकंचैव सप्तमंरविमेवच । नवमंचुंबुकम् तद्वन्नळिकात्वक्शराणिकम् ॥
टकणंचसमालोड्यसमभागान्यथाक्रमम् । सर्पास्यमूषामध्येथपूरयित्वायथाविधि ॥
नागकुंडांतरेस्थाप्य इंगालान्परिपूर्यच । त्रिपंचाशदुत्तरत्रिशतकक्ष्योष्णमानतः ॥२६००॥
सम्यग्धमनेच्छशमुखभस्त्राद्वेगेनशास्त्रतः । समीकरणयंत्रेथतद्द्रसंपरिपूरयेत् ॥



पश्चादत्यंतमृदुळम् विद्युद्गर्भंदृढंलघु । सोमांकलोहंभवति अविनाशंमनोहरम् ॥
तल्लोहंकुट्टिणीयंत्रात्पट्टिकांकारयेत्ततः । वितस्तित्रयमायामम् वितस्त्यष्टकमुन्नतम् ॥
डोलाकारेणैकपात्रम् कृत्वातस्यमुखोपरि । आच्छाद्यपट्टिकामेकां बध्नीयात्कीलकैर्दृढम् ॥
सार्धवितस्तिप्रमाणायामम् छिद्रद्वयंक्रमात् । पूर्वोत्तरविभागाभ्यांकृत्वातस्मिन्यथाविधि ॥
स्थापयेद्विद्युदागारेकीलकैस्सुदृढंयथा । तद्रंध्राधःप्रदेशेथडोलामध्येयथाक्रमम् ॥२६०६॥
पीठद्वयंकीलयुक्तम् स्थापयेत्तावदेवहि । वितस्तिद्वयमायामम् चतुर्वितस्तिरुन्नतम् ॥
पिंजळीपात्रवत्कुर्यात् पात्रद्वयमतःपरम् । षडंगुलायामयुक्तान्वितस्त्येकोन्नतांस्तथा ॥
कृत्वाष्टचषकान्पश्चात्पात्रयोरुभयोरपि । चतुर्दिक्षुयथाशास्त्रम् स्थापयेत्सुदृढंक्रमात् ॥
एकैकपात्रेचषकचतुष्टयमितीरितम् । एतच्चषकमध्येतु अन्योन्यस्पर्शनंयथा ॥२६१०॥
बृहच्चषकमेकैकम् स्थापयेत्पात्रयोःक्रमात् । पात्रद्वयमुखे पश्चात्पंचच्छिद्रसमन्वितां ॥
एकैकपट्टिकांसम्यक्कीलैस्संधारयेद्दृढम् । एतत्पात्रद्वयंडोलामुखरंध्रद्वयेक्रमात् ॥
प्रवेश्यतत्रत्यपीठमध्यदेशेन्यसेद्दृढम् । पंचांगुलायामयुतांस्तथैवाष्टांगुलोन्नतान् ॥
इक्षुयंत्रादिवन्मंथून्सदंतानष्टकारयेत् । एकैकपात्रांतरस्थचषकेषुयथाक्रमम् ॥
चतुर्दिक्षुयथाशास्त्रम् चतुर्मंथून्नियोजयेत् । तथैवमध्यमंथानद्वयंताभ्यांघनंयथा ॥२६१५॥
कृत्वातन्मंथुमध्येथस्थापयेन्मध्यरंध्रतः । यथान्योन्यस्पर्शनंस्यात्तथासंधारयेद्दृढम् ॥
पात्रद्वयमुखच्छिद्रद्वारेणैवप्रवेशयेत् । मध्यस्थमंथुदंडस्योपरिभागेयथाविधि ॥
सर्वमंथुसमावेशोयथास्यात्तद्वदेवहि । संधारयेच्चक्रावर्तकीलकंसुदृढंयथा ॥
मध्यमंथुभ्रामणेनसर्वमंथुभ्रमोयथा । भवेत्तथाप्रकर्तव्यम् तेषांकीलकतःक्रमात् ॥
अथयंत्रमुखाद्विद्युच्छक्तिम् सूर्यांशुभिःक्रमात् । समाहर्तुंविशेषेण उपायःपरिकीर्त्यते ॥
पूर्वोक्तडोलामध्यस्थपात्रयोरुपरिक्रमात् । द्विनवत्युत्तरशतसंख्याकैनैवहिक्रमात् ॥२६२१॥
किरणाकर्षणादर्शादष्टनाळान्प्रकल्पयेत् । पश्चादेकैकपात्रोपर्यथनाळैःप्रकल्पितान् ॥
स्तंभान्संस्थापयेत्सम्यक्चतुर्दिक्षुयथाक्रमम् । तेषामुपरिपंचास्यकर्णिकान्स्थापयेत्क्रमात् ॥
रुक्मपुंखाशाणंतेषुपूरयित्वाततःपरम् । विद्युदाकर्षकमणींस्तेषुसंधारयेद्दृढम् ॥
पूर्वोक्तांशुपदर्पणावरणम् चोपरिक्रमात् । कृत्वातदूर्ध्वेपंचशिखराकारगोपुरम् ॥२६२५॥
कुर्यादेकैकशिखरमुखे चंचूपुटाकृतिम् । कल्पयित्वाततस्तस्मिन्सिजीरकमणीनथ ॥

स्थापयेदंशुवाहकमणीनपिथथाविधि । अंशुमित्रमणिं मध्यशिखराग्रेदृढंयथा ॥
चतुर्मणीनामुपरिगोभिलोक्तविधानतः । षडंगुलायामयुक्तम् वितस्तित्रयमुन्नतम् ॥
किरणाकर्षणादर्शात्कृतंनाळचतुष्टयम् । स्थापयित्वातदुपर्द्रावकैश्शोधितान्यथ ॥
चतुर्वितस्त्यायामयुतमुखपात्राण्यथाविधि । संधारयेच्छंकुकीलैरच्छिद्राणिदृढान्यथा ॥
तेषुसंपूरयेद्रुद्रजटावालंप्रमाणतः । भ्रामणीघुटिकान्तेषुविन्यसेन्मध्यकेंद्रके ॥२६३१॥
किरणाकर्षणंवेगाद्भ्रामणीघुटिकास्ततः । कृत्वातन्नाळमार्गेणअंतःप्रेषयतिक्रमात् ॥
शिखराग्रस्थमणयःतच्छक्तिपिबतःक्रमात् । तदंतस्थितसिंजीरमणिश्चापितथैवहि ॥
अंशुमित्रमणिश्चैवतच्छक्तिमपकर्षति । तच्छक्तिमंशुपादर्शावरणंपरिगृह्यच ॥
विद्युदाकर्षकमणिसंधौ नियोजयेत् । पश्चादंतस्थितकर्णिकास्तां सम्यक्समाहरेत् ॥२६३५॥
तदधस्थितदंडेषुमध्यदंडाग्रतःक्रमात् । शक्तिंसंप्रेषयेत्सम्यग्वेगेनस्वीयतेजसा ॥
मध्यदंडभ्रामणेनमंथूनांभ्रामणंभवेत् । भ्रमणाद्द्रावकेशक्तिःप्रविश्याथयथाक्रमम् ॥
तत्रत्यमणिभिस्सम्यगाकृष्टाव्रजतिक्षणात् । तद्वेगान्मणयस्सम्यग्भ्रामयंत्यतिवेगतः ॥
तद्वेगाच्छक्तिरुत्पत्तिः अत्यंतंप्रभवेत्क्रमात् । एकच्छोटिकावच्छिन्नकालेशक्तिःस्वभावतः ॥
अशोत्युत्तरसाहस्रलिंकमात्रंभवेत्स्वतः । डोलामुखस्थगणपयंत्रेणाथयथाविधि ॥२६४०॥
समाकृष्याथतच्छक्तिं स्थापयेन्मध्यकेंद्रके ॥

॥ अथगणपयंत्रस्वरूपमाह सएव ॥

वितस्त्यैकायामयुक्तम् वितस्तित्रयमुन्नतम् । कुर्याद्विघ्नेश्वराकार यंत्रमेकंयथाविधि ॥
तदुत्तमांगाच्छुंडोराकारवद्वक्रतःक्रमात् । काचावरणसंयुक्तम् अंतस्तंत्रिसमायुतम् ॥
नाळमेकंप्रकल्प्याथडोलामुखस्थकीलके । संधार्यगणपकंठानाभ्यंतपार्श्वयोर्द्वयोः ॥
अंगुलत्रयविस्तार दंतचक्राणियोजयेत् । तथैवतत्कंठदेशे बृहच्चक्रंचस्थापयेत् ॥२६४५॥
करमध्यादागतायाः शक्तेश्चलनवेगतः । बृहच्चक्रंस्वभावेन भ्राम्यतेवेगतःक्रमात् ॥
तद्वेगतोन्तश्चक्राणां भ्रमणंस्याद्यथाक्रमम् । तथाकीलसंधानम् कारयेद्विधिवत्ततः ॥
आवृत्ततंत्रींतन्मध्येकुंडलीवत्प्रकल्पयेत् । तन्मध्येसप्तषष्टिशंखम् सिंहिकाभिधम् ॥
क्रव्यादलोहावरणसंयुक्तम् स्थापयेद्दृढम् । जीवात्रकद्रावकंचपंचचंचूप्रमाणतः ॥



(39)

संपूर्यंतस्मिन्सप्तदशोत्तरद्विशतात्मकम् । भामुखग्रामुखंनाम मणिंसंयोजयेत्ततः ॥२६५०॥
अंगुलद्वयमायामछत्रीन्पंचप्रकल्प्यच । बृहद्गुंजीप्रमाणान्पंचांशुमित्रमणीन्क्रमात् ॥
संधारयेत्पंचछत्रीन्शिखरेषुयथाक्रमम् । एकीभूयाथतत्पंच छत्रिणोभ्रामयंत्यथ ॥
तथाकीलकसंधानम् कृत्वाशंखोपरिन्यसेत् । अंशुपादर्शावरणम् तेषामुपरिकल्पयेत् ॥
तत्सूर्यकिरणांतस्थ शक्तिंस्वस्मिन्स्वभावतः । चतुरशीतिलिंकप्रमाणवेगंस्वशक्तितः ॥
एकच्छोटिकावच्छिन्नकालेनाकृष्यतान्दिबेत् । पश्चादावरणादर्शस्थितशक्तिंस्वतेजसा ॥
पूर्वोक्तछत्रीशिखरस्थितायेमणयःक्रमात् । तेसमाकृष्यतच्छक्तिंपिबंत्यत्यंतवेगतः ॥२६५६॥
पश्चात्तच्छक्तिवेगेनमणयोभ्रामयंतिहि । एतद्भ्रमणतःपंचछत्रयोपिभ्रमंतिहि ॥
एतेनैकच्छोटिकावच्छिन्नकालेतिवेगतः । सहस्रलिंकप्रमाणविद्युत्संजायते क्रमात् ॥
शंखस्थद्रावकंपश्चात्तच्छक्तिमपकर्षति । द्रावकस्थमणिःपश्चात्स्वपूर्वमुखतःक्रमात् ॥
समाकृष्याथतच्छक्तिंवेगात्पिबतितत्क्षणात् । ततस्तत्पश्चिममुखात्शक्तिःप्रवहतिस्वतः ॥
कार्यनिर्वहणायाथतच्छक्तिंतंत्रिभिःक्रमात् । समाहृत्यातिवेगेनयत्रकुत्रापिवा नरः ॥२६६१॥
नियोज्यतत्तत्कार्येषु उपयोक्तुंभवेद्ध्रुवम् । एतद्वेगपरिज्ञानेयंत्रम्वेगप्रमापकम् ॥
संस्थापयेत्तद्वदुष्णप्रमापकमपिक्रमात् । कालप्रमापकंचैव तत्तत्स्थानेयथाविधि ॥
एतद्यंत्रत्रयम् विद्युद्यंत्रस्थानेपियोजयेत् । जलांतर्गमनेपूर्वावरणस्ययथाविधि ॥
सर्वचक्रोपसंहारम् कृत्वापश्चाद्यथाक्रमम् । चक्रद्रोण्यावरणम् प्रकुर्याद्यानादधःक्रमात् ॥
जलनिर्बंधनार्थाय आमूलाग्रंयथाविधि । कुर्यादावरणम् क्षीरीपटतस्सुदृढंयथा ॥२६६६॥
वितस्त्यायामतस्तद्वद्वितस्त्यर्धघनंतथा । मंडूकहस्तवत्कुर्याच्चक्राणिसुदृढान्यथ ॥
चतुरंगुलगात्रांश्च द्वादशांगुलमुन्नतान् । लोहदंढान्कल्पयित्वा तेषामग्रेयथाविधि ॥
मंडूकहस्तचक्राणियोजयेत्कीलकैस्सह । सर्वत्रचक्रद्रोणीनां पार्श्वयोरुभयोरपि ॥
द्रोण्यंतर्गतचक्राणांसंधिस्थानसमानतः । संस्थापयेल्लोहदंडान्सचक्रांश्चयथाविधि ॥२६७०॥
सुदृढान्सरळान्चक्रकीलकांतर्गतान्यथा । तथादंडद्वयंचक्रसंयुतंकीलकैस्सह ॥
आवृत्यपूर्वोक्तचक्रदंडसंधिमुखांतरात् । विमानपुरतस्तद्वत्पार्श्वयोरुभयोरपि ॥
सलिलोत्क्षेपणार्थायस्थापयेत्कीलकैर्दृढम् । शक्तिसंचोदनादादिकीलकभ्रमणंभवेत् ॥
तच्चक्रवेगात्सर्वेषांचक्राणांभ्रमणंभवेत् । जलस्योत्क्षेपणंतेन आसमंताद्यथाक्रमम् ॥

प्रभवेदतिवेगेनतस्माद्यानःप्रधावति । एवंक्रमेणविधिवदूर्ध्वावरणपार्श्वयोः ॥२६७५॥
संधारयेन्नालाघातचक्राणिसुदृढान्यथ । ऊर्ध्ववाताकर्षणार्थम क्षीरीपटविनिर्मितान् ॥
षडंगुळायामवातनाळान्द्रावकशोधितान् । पूर्वोक्तप्रथमावरणस्थसर्वगृहांतरात् ॥
ऊर्ध्वावरणोर्ध्वमुखपर्यंतंसरळंयथा । संधारयेदृढंपश्चात्तन्मुखेषुयथाविधि ॥
प्रदक्षिणावर्तलोहमुखानिस्थापयेत्ततः । वातपूरणकीलानितत्तत्पार्श्वेनियोजयेत् ॥
ऊर्ध्ववाताकर्षणार्थंसीत्कारीकीलकान्यपि । संधारयेद्विशेषेणसर्वत्रसुदृढंयथा ॥२६८०॥
नाळपूरितवायुश्चसीत्कार्याकर्षणोद्भवः । द्वितीयावरणमारभ्यप्रथमावरणावधि ॥
यथाप्रसरणंवेगात्प्रभवेत्सर्वतोमुखम् । तथासंयोजयेच्चक्रकीलकानियथाक्रमम् ॥
शक्तिसंचोदनात्तत्कीलकचक्रस्यभ्रामणम् । तेनवातद्वयंसम्यक्क्रमादावरणद्वये ॥
संपूर्यत्यतिवेगेनयंतॄणांतेनभूरिशः । सुखावहंभवेत्तस्मिन्सर्वेषांयुगपत्क्रमात् ॥
तस्मात्सर्वप्रयत्नेनवातनाळानियोजयेत् । वातनाळानावरणद्वयमध्येयथाविधि ॥२६८५॥
संस्थाप्यपश्चादावरणोर्ध्वपार्श्वेसमंयथा । दक्षिणोत्तरभागेषु चतुर्दिक्षुयथाक्रमम् ॥
विकासनोपसंहारकीलकान्चक्रसंयुतान् । सुदृढान्सरळांश्चैवस्थापयेच्छत्रिवत्क्रमात् ॥
पूर्वोत्तरावरणयोस्संधिस्थानेयथाविधि । एकैकावरणस्याथपृथक्करणहेतुकान् ॥
जटातंत्रीसमायुक्तचक्रकीलान्पृथक्पृथक । सर्वत्रस्थापयेत्सम्यग्वितस्तिदशकांतरे ॥
शक्तिसंचोदनात्कीलचक्राणांभ्रमणंयथा । तथातंत्रिसमाहृत्य शक्तिस्थानाद्यथाक्रमम् ॥
चक्रकीलकमूलांतंसम्यक्संचोदयेदृढम् । तेनविद्युत्प्रसरणंकुर्यादुक्तप्रमाणतः ॥२६९१॥
तच्छक्तिचोदनात्कीलचक्राणांभ्रमणंभवेत् । तस्मादावरणभेदःपृथक्पृथग्यथाक्रमम् ॥
युगपत्प्रभवेत्सम्यक्पृथिव्याकाशमार्गतः । यथेष्टंवेगतश्चावरणौगंतुंभवेत्स्वतः ॥
पश्चाद्द्वितीयावरणोपरिशास्त्रप्रमाणतः । यंत्रप्रवेशनार्थाय वस्तुप्रक्षेपणायच ॥
गृहाणिकल्पयेच्चित्रविचित्राणियथाक्रमम् । वातायनकवाटाद्याःपूर्वावरणवत्क्रमात् ॥२६९५॥
यथादृश्यंभवेद्बाह्येकर्तव्यास्तंत्रतस्तथा । पश्चादावरणकुड्यानासमंताद्यथाक्रमम् ॥
सर्वत्रकारयेत्पीठावरणाग्रेदृढंयथा । वितस्तिसप्तकोन्नत्यं गात्रेत्वर्धवितस्तिकम् ॥
सर्वत्रकुड्यप्रमाणमेवंशास्त्रेनिरूपितम् । तृतीयावरणाद्विद्युत्संग्रहार्थंयथाविधि ॥
विद्युत्पूरकपात्रेणसंयुतंतंत्रिपूर्वकम् । पश्चाद्भागगृहेस्तंभद्वयंसंस्थापयेदृढम् ॥



ध्वजस्तंभंपुरोभागेस्थापयेत्सुदृढंयथा । घंटाद्वयंचतन्मूलेकांस्यलोहविनिर्मितम् ॥२७००॥
यंतॄणांकालसंकेतनिर्णयार्थंयथाविधि । कर्तुंघंटारवंतत्रस्थापयेत्सरळंदृढम् ॥
वेणीतंत्रींसमादाय गृहकुड्योपरिक्रमात् । सर्वत्रयोजयेत्पश्चात् सकीलंसरळंयथा ॥
अत्यंतानर्थकार्याणि यदायत्रभवेत्तदा । हस्तात्संगृह्यतत्रत्य वेणीतंत्रींप्रकर्षयेत् ॥
तेनविज्ञायतेकृत्यम् शीघ्रंयानाधिकारिणा । ततोयानाधिकारीतुवेगादागत्यतद्गृहम् ॥
विचार्यतत्रत्यानर्थकारणंन्यायतस्स्वयम् । समाधानंकरोत्यस्माद्वेणीतंत्रींनियोजयेत् ॥२७०५॥
भाषाकर्षणयंत्राणिभावाकर्षणकान्यपि । दिक्प्रदर्शकयंत्राणिकालप्रमापकाण्यपि ॥
शीतोष्णादिप्रमापकयंत्राण्यपिविशेषतः । सतंत्रीकीलकैस्सम्यक्पूर्वपश्चिमयोःक्रमात् ॥
संस्थापयेत्ततोत्यंतवातवर्षातपादिभिः । अत्यंतोपद्रवंव्योमयानस्यप्रभवेद्यदि ॥
तन्निवारयितुंयंत्रत्रयंपश्चाद्यथाविधि । पूर्वपश्चिमयोश्चैवतथाशिखरपार्श्वयोः ॥
संस्थापयेत्क्रमात्सम्यक्पृथक्पृथग्यथाक्रमम् । श्लोकस्थादिपदात्सम्यग्हिमसंहारकादयः ॥
प्रोक्तास्स्युःपालनार्थाय विमानस्ययथाक्रमम् । उक्तंहियंत्रसर्वस्वे यंत्रत्रयंयथाविधि ॥२७११॥
सर्वेषांसुखबोधायतान्येवात्रप्रचक्षते । त्र्यास्यवातनिरसनयंत्रंतद्वन्मनोहरम् ॥
सूर्यातपोपसंहारयंत्रंचैवततःपरम् । अतिवर्षोपसंहारेयंत्रंचेतित्रिधास्मृतम् ॥
प्रोक्तंशास्त्रेयथातेषामाकाररचनादयः । तथासंगृह्यविधिवत्संग्रहेणात्रवर्ण्यते ॥
आदौत्र्यास्यवातनिरसनयंत्रंयथाविधि । प्रोच्यतेशास्त्रतस्सम्यक्संग्रहेणयथामति ॥२७१५॥
वारुणेनैवलोहेनतद्यंत्रंपरिकल्पयेत् । इतियंत्रविदांवादःयंत्रशास्त्रेनिरूपितः ॥

॥ तदुक्तंलोहसर्वस्वे ॥

वारिपंकविषारिटंकणजालिकाभ्रविषोदरान् । वारिपंचकक्षारसप्तकक्षोणमंजुळगोधरान् ॥
वारुणास्यकपार्वणारुणकाकतुंडकभूधरान् । वारुणाभ्रकक्षारसूरणकुंडलीमुखलोधरान् ॥
वारिकुट्मलशारिकारसपंचवाणसहोदरान् । वार्धिपंचकमाक्षिकाष्टकवातकंकणिकोदरान् ॥
वालुकांजनकुक्कुटांडककार्मुखीमललोद्भृकान् । वीरुधारससिंहिकामुखकूर्मजंघमसूरिकान् ॥
शुद्धानेतान्समाहृत्यमूषायांपरिपूर्यच । स्थापयित्वापद्ममुखकुंडेसम्यग्यथाविधि ॥२७२१॥
पंचास्यभस्त्रिकात्सप्तशतकक्ष्योष्णवेगतः । गालयित्वाथयंत्रास्येतद्रसंपूरयेच्छनैः ॥

ऋज्वीकरणयंत्रस्थकीलकैस्तद्रसंक्रमात् । समीकृतंचेन्मृदुळंधूम्रवर्णंतथैवहि ॥
अत्यंतलघुवातातपाद्यैरच्छेद्यमेवच । प्रभवेद्दारुणंलोहंसुदृढंसुमनोहरम् ॥
त्र्यास्यवातनिरसनयंत्रंतेनप्रकल्पयेत । आदौकुर्याल्लोहशुद्धिंपश्चादाकारकल्पनाम् ॥२७२५॥

॥ शुद्धिकममुक्तं क्रियासारे ॥

शुंडीरद्रावकात्सम्यक्पाचनायंत्रतःक्रमात् । पाचयेत्त्रिदिनंपश्चात्कुट्टिणीयंत्रतःपुनः ॥
पट्टवत्कारयेत्सम्यक्पट्टिकांसुदृढंयथा । वातारिकंदनिर्यासंकृत्वापश्चाद्यथाविधि ॥
तत्पट्टिकोपर्यंगुलप्रमाणेनसमग्रतः । विलेप्यतापनायंत्रेतापयेत् त्रियाममात्रकम् ॥
पश्चात्संगृह्यविधिवन्मृत्सारंवागुरुंतथा । जिन्मिश्रितफणिक्षीरंसमभागंयथाक्रमम् ॥
भांडेनिक्षिप्यविधिवत्पाचनायंत्रतःक्रमात । पाचयेद्दिनमेकंच पश्चात्संग्राहयेच्छनैः ॥२७३०॥
निर्यासंप्रभवेल्लाक्षारसवद्रक्तवर्णतः । तन्निर्यासेनाथसम्यक्पट्टिकांलेपयेत्क्रमात् ॥
पुनश्चतापनायंत्रेतापयेद्यामामात्रकम् । पुनस्संगृह्यतल्लोहमातपेशोषयेद्दिनम् ॥
ततःकंटकहेरंडधवळोदरचारकान् । तिलांश्चसमभागेनमेळयित्वायथाविधि ॥
तैलाहरणयंत्रेण तैलमाहृत्यतत्परम् । तत्पट्टिकांलेपयित्वादद्यात्सूर्यपुटेक्रमात् ॥
दिनत्रयमतस्सम्यगंगारेतापयेद्दिनम् । पश्चात्कंगोळनिर्यासमेकांगुलप्रमाणतः ॥२७३५॥
लेपयित्वामणीन्सम्यक्छुद्धान्वातकुठारकान् । अंगुष्ठमात्रान्तस्मिन्नासमंतात्योजयेत्क्रमात् ॥
तत्समादायविधिवत्खदिरांगारकुंडके । न्यसेद्यामत्रयंतेनवज्रवत्प्रभवेत्स्वयम् ।
एतल्लोहेनकवचम् यानमानानुसारतः । कृत्वामूलेतथामध्येचांते चैवयथाक्रमम् ॥
प्रसारणतिरोधानकीलकानिन्यसेत्ततः । अंतःप्रावरणेनाळतंत्रीमूलाद्यथाविधि ॥
यथाशक्तिप्रसरणम् भवेत्सम्यक्तथाक्रमात् । विद्युद्यंत्रंसमारभ्य अंतःप्रावणावधि ॥२७४०॥
तंत्रीमेकांसमाहृत्यनाळकीलांतरेक्रमात् । संयोजयेत्तेनविद्युद्व्याप्हसर्वत्रवेगतः ॥
पट्टिकोपरिविन्यस्तमणिगर्भांतरेक्रमात् । स्वयंप्रविश्यतच्छक्त्यामिळितासतिवेगतः ॥
पट्टिकोपरिसर्वत्रव्याप्यसंचलतांव्रजेत । महाप्रळयकालीनवायुवद्वेगतःक्रमात् ॥
प्रचंडमारुतस्सम्यग्विमानोपरिवीजति । तदातद्वायुवेगस्तंभनंकृत्वासमग्रतः ॥
त्रिधाविभज्यतद्वायुंप्रेषयेदूर्ध्वतोंबरे । एतद्वातप्रेषणार्थंयानस्योपरिशास्त्रतः ॥२७४५॥



सचक्रकीलकैस्सम्यक्सीत्कारीभस्त्रिकादिवत् । सर्पास्यकीलत्रितयम् कल्पयित्वायथाविधि ॥
संस्थापयेत्सुसरळम् दृढंचावृत्तशंकुभिः । वायुस्स्वभावानुसारादूर्ध्वंगच्छेद्यथाक्रमम् ॥
तदासंभ्रामयेत्सर्पास्यकीलकत्रयंक्रमात् । पश्चाद्वेगेनतद्वायुम् पूर्वोक्तास्यत्रयंततः ॥
सर्पवद्वायुमाकृष्यतत्तद्भागानुसारतः । स्वमुखेनैववेगेनोर्ध्वंखेप्रेषयतिस्वतः ॥
एतेनवायुर्निश्शेषम् लयंयातिस्वमंडले । तस्मादपायोवातेनयानस्यनभवेद्ध्रुवम् ॥२७५०॥
तस्माद्यानस्यवातापायविनाशोभविष्यति । अनायासाद्यातिपश्चाद्विमानस्सरळंयथा ॥
अतोविमानावरणत्रयेप्येवंप्रकल्पयेत् । वातोपसंहारयंत्रमेवमुक्त्वायथाविधि ॥
अथवर्षोपसंहारयंत्रमद्यप्रचक्षते । वर्षोपहारयंत्रंक्रौंचकेनैवकल्पयेत् ॥

॥ उक्तंहिक्रियासारे ॥

यद्द्रवप्राणनशक्तीःजलस्यापहरेत्स्वतः ॥ तत्क्रौंचिकलोहमितिप्रवदंतिमनीषिणः ॥
वर्षोपसंहारयंत्रमतस्तेनैवकल्पयेत् ॥ इत्यादि ॥
यथोक्तंयंत्रसर्वस्वेक्रौंचलोहविनिर्णयः । तथैवात्रप्रवक्ष्यामिक्रौंचकस्ययथाविधि ॥२७५६॥
ज्योतिर्मुखंत्र्यंबकंच हंसतुंडंसुधाकरम् । वसुरुद्रार्काब्धिभागान् तथैवचपुनःक्रमात् ॥
टंकणंसैकतंचूर्णमौर्वारम् रुरुकंतथा । पटोलकंवार्ध्युषिकम् चैतेसप्तयथाक्रमम् ॥
वसुवेदार्काग्निबाणतारशैलविभागतः । संयोज्यमूषास्यमध्येस्थापयेत्पद्मकुंडके ॥
द्वादशोत्तरपंचशतकक्ष्योष्णप्रमाणतः । गालयित्वाऽतिवेगेन त्रिमुखीभस्त्रिकामुखात ॥
समीकरणयंत्रास्ये तद्द्रसंपूरयेच्छनैः । एवंकृतेत्यंतमृदुमधुवर्णंदृढंरुचम ॥२७६१॥
वर्षविच्छेदनकरम् वर्षवातातपाग्निभिः । अभेद्यमुष्णगर्भंच विषनाशकरंशिवम् ॥
जलद्रवप्राणनाख्यशक्त्याकर्षणदीक्षितम् । प्रभवेत्क्रौंचिकंलोहम् सर्वजंतुविषापहम ॥
एतल्लोहेनकर्तव्यंयंत्रंवर्षोपहारकम् । तुळसीरुक्मपुंखाग्नित्रिजटापंचकंटकी ॥
एतेषांबीजतैलेन लोहंसंताप्यशास्त्रतः । पश्चाद्यंत्रंयथाशास्त्रंकल्पयेन्नान्यथाभवेत् ॥२७६५॥
तल्लोहंकुट्टिणीयंत्रात्पट्टिकांकारयेत्ततः । वितस्तिद्वयमायामम् षड्वितस्त्युन्नतंतथा ॥
एकैकस्मिन्नेकनाळम् यथायोजयितुंभवेत् । कल्पयेत्सुदृढान्नाळान्यावद्यानोन्नतंतथा ॥

विमानावरणस्याग्रेनाळसंयोजनायहि । वितस्तित्रयमायामनाळान्पश्चाद्यथाक्रमम् ॥
संधारयेद्दासमंतात्सकीलान्सुदृढंयथा । तथैवयानोर्ध्वभागेप्येवमेवनियोजयेत् ॥
चणनिर्यासमादायनाळानामुपरिक्रमात् । एकांगुलप्रमाणेनसम्यक्संलेपयेत्ततः ॥२७७०॥
वज्रगर्भद्रावकेणपुनस्तदुपरिक्रमात् । त्रिवारंलेपयेत्तेनवज्रवत्सुदृढंभवेत् ॥
तन्नाळोपरिसर्वत्रद्वादशांगुलमंतरम् । पृथक्पृथक्कल्पयित्वासिंजीरंवज्रमिश्रितम् ॥
विन्यस्ययामार्धकालम् पावकेनप्रतापयेत् । द्रवप्राणनशक्त्याकर्षणदक्षान्जलस्यहि ॥
अंगुष्ठमात्रान्पंचास्यमणीन्व्याघ्रवशंवरीन् । पूर्वोक्तसिंजीरवज्रोपरिसंधारयेद्दृढम् ॥
पश्चान्नाळान्समाहृत्य व्योमयानोपरिक्रमात् । ऊर्ध्वाधोभागनाळस्थमुखरंध्रेषुकीलकैः ॥
अष्टदिक्षुक्रमात्सम्यग्योजयेत्सुदृढंयथा । प्रसारणोपसंहारकीलकान्चक्रसंयुतान् । २७७६॥
एकैकनाळमूलप्रदेशेसंस्थापयेत्क्रमात् । विद्युद्यंत्रंसमारभ्ययाननाळांतरावधि ॥
काचनाळान्तरादेकतंत्रीमाहृत्यशास्त्रतः । संयोजयेत्सर्वनाळान्तरेसम्यग्यथाक्रमम् ॥
पश्चान्नाळेष्वष्टदिक्षुतंत्र्याविद्युद्यथाविधि । शनैस्संप्रेषयेद्वेगात्तेनशब्दःप्रजायते ॥
मणिशक्तिस्ततोवेगात्समागत्ययथाक्रमम् । विद्युच्छक्तिंसमाहृत्यनाळानामुपरिक्रमात् ॥
आसमंताद्व्यापयित्वास्वस्मिन्संधारयेत्ततः । शक्तिद्वयंमिळित्वाथसर्वत्रमणिषुक्रमात् ॥
प्रविश्यवेगात्प्राणनद्रवशक्तीर्विशेषतः । द्वेधाविभज्योर्ध्वमुखम् स्वतोभूत्वाययथाक्रमम् ॥
विमानोपरिसर्वत्रव्याप्यतेथस्वशक्तितः । तत्रत्यवातावरणमाक्रम्यस्वेनतेजसा ॥
वायुमंडलमध्यस्थद्रवप्राणनयोःक्रमात् । द्वेधाविभज्यतेशक्तितेनवायुर्लघुत्वताम् ॥
प्राप्यमेघजलाधारस्थितशक्तिद्वयंक्रमात् । वेगेनाकर्षितुंशक्तोनभवेद्बलहीनतः ॥२७८५॥
वर्षमेघपुरोवातव्याप्तिर्यानोपरिक्रमात् । पतेद्यदातिवेगेनतदातत्रत्यवायुना ॥
संसर्गःप्रभवेत्पश्चात्परस्परविरोधतः । तस्यद्रवप्राणानाख्यशक्तिद्वयमतःपरम् ॥
द्वेधाविभज्यतेतस्माद्वर्षंसंशाम्यतिक्रमात् । तेनयानस्यविच्छित्तिर्नभवेत्तुकदाचन ॥
तस्मात्सर्वप्रयत्नेनयंत्रंवर्षोपहारकम् । विमानोपरिसंयोज्यमितिशास्त्रविनिर्णयः ॥
यंतासम्यक्विदित्वैतद्रहस्यंयानमुत्सृजेत् । अन्यथानिष्फलंयातिविमानश्चविनश्यति ॥
वर्षोपसंहारयंत्रमेवमुक्त्वायथाविधि । सूर्यातपोपसंहारयंत्रमद्यप्रचक्षते ॥२७९१॥
सूर्यातपोपसंहारयंत्रंशास्त्रविधानतः । आतपाशनलोहेनकर्तव्यमितिनिर्णयः ॥



॥ तदुक्तंक्रियासारे ॥

आतपाशनलोहेनसूर्यातपनिवारणम् । तस्मादातपसंहारयंत्रंतेनैवकल्पयेत् ॥ इति ॥
एतल्लोहस्वरूपंतुलोहतंत्रेनिरूपितम् । तत्संगृह्यात्रविधिवत्संग्रहेणनिरूप्यते ॥
और्वारिकंकौशिकगारुडंचसौभद्रकंचांद्रिकसर्पनेत्रम् । शृंगाटकंसौम्यकचित्रलोहंविश्वोदरं-
पंचमुखंविरंचम् ॥२७९५॥

एतद्द्वादशलोहानिसमभागान्यथाविधि । संगृह्यपद्ममूषायांविनिक्षिप्यपुनःक्रमात् ॥
टंकणंसप्तभागंचपंचमांशंतुचौळिकम् । वराटिकाक्षारषट्कम् कुंजरंद्वादशांशकम् ॥
नवांशंसैकतंशुद्धम् कर्पूरंचचतुर्गुणम् । षोडशांशंतुत्रुटिलम् दशांशंपौष्णिकंक्रमात् ॥
एतान्यष्टपदार्थांश्चमूषायांपूरयेत्ततः । तन्मूषांनाळिकाकुंडे स्थापयित्वायथाविधि ॥
पंचविंशोत्तरसप्तशतकक्ष्योष्णवेगतः । मूषकास्यभस्त्रिकात्सम्यग्ध्मनेदतिवेगतः ॥२८००॥
समीकरणयंत्रेथ तद्रसंपूरयेत्क्रमात् । एवंकृतेत्यंतशुद्धम् पिंगळंभारवर्जितम् ॥
अदाह्यमच्छेद्यकंच अत्यंतमृदुळंदृढम् । आतपाशनलोहंस्यात्सर्वोष्णपरिहारकम् ॥इत्यादि॥
सूर्यातपोपसंहारयंत्रंशास्त्रविधानतः । आतपाशनलोहेनैवकर्तव्यम् नचान्यथा ॥

॥ तदुक्तंयंत्रसर्वस्वे ॥

आतपाशनलोहशुद्धिंकृत्वायथाविधि । पश्चाद्यंत्रंप्रकर्तव्यमन्यथानिष्फलंभवेत् ॥

॥ शुद्धिक्रममुक्तं क्रियासारे ॥

अश्वत्थचूतकदळीक्षीरिणी बाडबातथा । त्रिमुखीत्रिजटागुंजा शेरिणीचपटोलिका ॥
एतेषांत्वचमानीय चूर्णीकृत्यततःपरम् । भांडेसंपूर्यविधिवत्तद्दशांशंजलंन्यसेत् ॥२८०६॥
पाचयेत्पाचनायंत्रेदशैकंक्वाथमाहरेत् । पश्चाद्बिडारलवणम् सैंधवंचोषरंतथा ॥
बुडिलक्षारकम् माचीपत्रक्षारमतःपरम् । शुद्धप्राणक्षारपंचकम् सामुद्रंचशास्त्रतः ॥
एतानैकादशक्षाराण्याहृत्यसमभागतः । द्रवाकर्षणयंत्रास्येसंनिवेश्ययथाक्रमम् ॥
पाकंकृत्वाथविधिवदाहरेद्द्रावकंततः । पूर्वोक्तक्वाथमादायतदर्धंद्रावकंतथा ॥२८१०॥
संमेळयविधिवत्पाचनायंत्रास्येविनियोजयेत् । आतपाशनलोहंचतस्मिन्निक्षिप्यशास्त्रतः ॥

पाचयित्वापंचदिनंपश्चात्संगृह्यवारिणा । क्षाळयित्वाथमधुनालेपंकुर्यात्समग्रतः ॥
चंडातपेत्र्यहमात्रम् शोषयित्वायथाविधि । पश्चात्प्रक्षाळ्यविधिवत्तेनयंत्रंप्रकल्पयेत् ॥

# त्रिपुरोथ

बोधानन्द वृत्तिः—

शकुनाद्यसिंहिकान्तविमानानि यथाविधि । उक्त्वेदानीं त्रिपुरविमानस्सम्यक् प्रचक्षते ॥
अस्यत्रिपुरविमानस्यावरणानित्रयःक्रमात् । एकैकावरणस्यात्र पुरमित्यभिधीयते ॥२८१५॥
पुरत्रयेण संयुक्तं विमानं त्रिपुरं विदुः । भास्करांशुसमुद्भूतशक्त्या संचोदितं भवेत् ॥

॥ नारायणोपि ॥

पृथिव्यप्स्वन्तरिक्षेषु स्वाङ्गभेदात् स्वभावतः । यस्समर्थोभवेद्गन्तुम् तमाहुस्त्रिपुरंबुधाः ॥
भागत्रयं भवेदस्य त्रिपुरस्य यथाक्रमम् । तेषु प्रथमभागस्य सञ्चारः पृथ्वीतले ॥
द्वितीयभागसञ्चारो जलस्यान्तर्बहिः क्रमात् । तृतीयभागसञ्चारस्त्वन्तरिक्षे भवेत्स्वतः ॥
एकधा कीलकैस्सम्यग्भागत्रयमतः क्रमात् । एकीकृत्य यथाशास्त्रं चोदयेद्यदिखेस्वतः ॥
एकस्वरूपतस्सम्यग्विमानस्त्रिपुराभिधः । साङ्केतकानुसारेणवेगात् सञ्चरतिध्रुवम् ॥२८२१॥
पृथिव्यप्स्वन्तरिक्षेषु गमनार्थं यथाविधि । त्रिधाविभज्यते व्योमयानश्शास्त्रविधानतः ॥
तेष्वादिमविभागस्य रचनाविधिरुच्यते । त्रिणेत्रेणैवलोहेन त्रिपुरंकारयेत् सुधीः ॥
अन्यथानिष्फलम् यातीत्याहुर्लोहविदांवराः । तस्मादादौ त्रिणेत्राख्यलोहम् सम्पादयेन्नरः ॥

॥ त्रिणेत्रलोहमुक्तं शाकटायनेन ॥

दशरोचिष्मतीलोहः कान्तमित्रोष्ट एवच । षोडशांशो वज्रमुखश्चेति भागविनिर्णयः ॥
एतद्भागानुसारेण लोहत्रयमतः परम् । मूषामुखेविनिक्षिप्यतस्मिन् पश्चाद्यथाक्रमम् ॥



टङ्कणं पञ्च तद्वत् हि त्रैणिकं सप्त एव च । एकादश श्रपणिको पञ्च माण्डलिकस्तथा ॥
रुचकः पारदश्चैव त्रीणि त्रीणि पृथक्पृथक् । सम्यक्संयोज्य विधिवत् कुण्डेपद्ममुखेदृढम् ॥
एकत्रिंशदुत्तरषट्शतकक्ष्योष्णवेगतः । त्रिमुखीभस्त्रिकात् सम्यग्गालयेदतिवेगतः ॥
तद्गालितरसंपश्चाद् यन्त्रास्येपूरयेच्छनैः । समीकृतंचेन्मृदुलं केकापिञ्छसमप्रभम् ॥२८३०॥
अदाह्यमच्छेद्यं च अत्रोट्यं भारविवर्जितम् । जलाग्निवातातपाद्यैरभेद्यं नाशवर्जितम् ॥
शुद्धं सूक्ष्मस्वरूपं च भवेल्लोहं त्रिणेत्रकम् ॥ इत्यादि ॥
यथेष्टं कारयेत् पीठं त्रिणेत्रेण यथाविधि । निदर्शनार्थं पीठप्रमाणमत्र प्रचक्षते ॥
वितस्तिशतमायामम् वितस्तित्रयगात्रकम् । वर्तुलंकारयेत्पीठम् चतुरस्रमथापिवा ॥
पीठस्यपश्चिमेभागे वितस्तीनांतुविंशतिः । विहायपश्चात्पीठे वितस्तिदशकान्तरात् ॥२८३५॥
कुर्यादशीतिसंख्याकान् केन्द्ररेखान् यथाक्रमम् । चक्रद्रौणिकसन्धानायाथ तत्तत्प्रमाणतः ॥
वितस्त्याशीतिदीर्घं च वितस्तित्रयविस्तृतम् । वितस्तिपञ्चकौन्नत्यमाकारे जलद्रोणिवत् ॥
एवंक्रमेणकर्तव्यं जलद्रोणिर्यथातथा । पश्चात्संधारयेद्द्रोणीन् केंद्ररेखासुशास्त्रतः ॥
द्रोणीनामुपरिभागे वितस्तित्रयविस्तृतम् । छिद्रंकुर्यादासमन्तात् सर्वत्रविधिवत्क्रमात् ॥
स्वान्तर्गतानि चक्राण्यूर्ध्वमाकृष्यातिवेगतः । चक्राण्यदृश्यानियथा तथावरणतःक्रमात् ॥
चक्राधोभागमाक्रम्यस्वयम् स्थित्वायथाक्रमम । पुनस्स्वस्थानमामाद्यभूमौ चक्रप्रसारणम् ॥
यथाभवेत् तथाकीलकानितेषु प्रकल्पयेत् । चक्राणांकल्पयेत् पश्चादीषादण्डान्यथाविधि ॥
विद्युदाकुञ्चनार्थाय तेष्वाकुञ्चनकीलकान् । प्रतिदण्डेयथाशास्त्रं मध्यकेंद्रेनियोजयेत् ॥
सार्धद्वयवितस्त्युन्नतम् वितस्त्यैकगात्रकम् । ईषादण्डप्रमाणंस्याच्चक्रमान प्रकीर्त्यते ॥
वितस्तित्रयमायामं गात्रमेकवितस्तिकम् । षडरंवाथसप्तारं पञ्चारंवायथोचितम् ॥२८४५॥
प्रकल्प्यनेम्यां सन्धार्यमुषीकावरणंतथा । चक्रान्त्यभागे चतुरङ्गुलमुत्सृज्यशास्त्रतः ॥
रन्ध्रमन्तःप्रकर्तव्यं काचावरणतःक्रमात् । एवंसर्वत्रचक्राणां कारयेद्वर्तुलंयथा ॥
चक्रद्रोण्यन्तरे चक्राण्येतानि द्वादशक्रमात् । सन्धारयेद्यथेष्टं वा षट्चतुश्चाष्टएवच ॥
सोमकान्ताख्यलोहस्य तन्त्रीश्शक्त्यपकर्षणे । चक्रान्तस्थितरन्ध्रेषुमन्धारयेत् पृथक्पृथक् ॥
एकैकचक्रमध्येथ विद्युदाघातकीलकम् । संयोजयेत् ततस्तेषुछिद्रप्रसारणकीलकान ॥
सन्धार्यतच्चालनार्थं चक्रकीलमतःपरम । स्थापयेत्तस्योर्ध्वभागेयथा स्वाभिमुखंभवेत् ॥

साङ्केतकानुसारेण क्रमाच्चक्राणिचालयेत् । सर्वेषां चक्रद्रोणीनामुपरिष्टान्तरेक्रमात् ॥
संधारयेत् सोमकान्ततन्त्रीद्वयमतःपरम् । पूर्वपश्चिमदेशेथचक्राणां संधिकीलके ॥
आसंधिकीलमारभ्यतन्त्र्यन्तं सर्वतःक्रमात् । विद्युच्छक्त्याकर्षणार्थं शलाकान्सन्नियोजयेत् ॥
सर्वचक्रद्रोण्यूर्ध्वभागेष्वपि(च) यथाक्रमम् । तंत्र्यन्तर्गतशक्तिं तच्छलाकैरपकृष्यच ॥
चोदयेत्सर्वचक्राणामुपरिष्टाद्यथाविधि । चक्राधोभागदेशेथ चक्रान्तर्गततंत्रिभिः ॥२८५९॥
चोदयेद्वेगतश्शक्तिं तत्तत्कीलकचालनात् । पर्वतारोहणे तिर्यग्गमनादौविशेषतः ॥
चक्रोर्ध्वाधःप्रदेशस्थशक्तिवेगप्रचोदनात् । विमानोयातिवेगेन शक्त्याकुञ्चनतःक्रमात् ॥
चक्रोर्ध्वशक्त्याकर्षणेनाधश्शक्तिप्रसारणात् । यथायथाप्रगन्तव्यं गच्छत्येवतथास्वतः ॥
तिर्यञ्चनादौचक्राणां पुरस्ताच्चक्रकीलकान् । सन्धारयेद्यथाशास्त्रं सुदृढंसरलंयथा ।२८६०॥
वेगप्रचोदने सूक्ष्मकीलकद्वयमप्यथ । सङ्केतकीलचक्रस्योभयपार्श्वे दृढंयथा ॥
संधारयेत्तेन शक्तिर्यावद्वेगमपेक्षितम् । तावत्प्रमाणवेगेनविमानो गन्तुमर्हति ॥
तत्कीलकशलाकस्थचक्रपट्टिकयोः क्रमात् । अनुलोमविलोमाभ्यां शक्तिमार्गमुखान्तरे ॥
तत्तत्कालानुसारेण कीलकद्वयचालनात् । न्यूनाधिक्यस्थितिश्शक्तेर्यथाकामं भवेत्क्रमात् ॥
तथैवतिर्यग्गमनादौ विमानस्यशास्त्रतः । शक्तिप्रसारणमुखबन्धनकीलकं ततः ॥२८६५॥
संधारयेत्तेन शक्तिस्तिर्यग्गमनमेधते । विमानस्यगतिस्तेन तिर्यग्भवति हि ध्रुवम् ॥
तत्कीलकस्यानुलोमभ्रामणात् पूर्ववत्स्वतः । विद्युत्प्रसारणमुखबन्धनस्यापकर्षणात् ।
भवेत्पश्चाद्यथापूर्वं सरलाद्गमनंयथा । विद्युदाकर्षणार्थाय शक्तिस्थानान्तरात्तथा ॥
संधारयेद्यथाशास्त्रं नालमेकंसचक्रकम् । तन्त्रीद्वयसमाविष्टं पीठमूलान्तरेक्रमात् ॥
संस्थापयेत्पञ्चमुखचक्रकीलमुखान्तरात् । तत्कीलमध्यस्थतन्त्रीद्वयमतः परम् ॥
सम्मेलयेच्चक्रोर्ध्वाधरस्थतन्त्र्योर्यथाविधि । यथाप्रमाणतश्शक्तिमेतत्तन्त्रीमुखान्तरात् ॥
समाकृष्याथ विधिवच्चक्रोर्ध्वाधःप्रदेशके । सञ्चोदयेद्यथाकामं काचकुप्पिकमध्यतः ॥
तेनवेगात्प्रचलनं चक्राणांप्रभवेत्क्रमात् । पश्चाद्विमानगमनंभवेत् सांकेततस्स्वयम् ॥
पश्चादावरणं कुर्याच्चक्रद्रोण्युपरिक्रमात् । पीठ वृत्तप्रदेशस्थद्रोणीरेखाद्वयान्तरे ॥
एकैकस्तम्भवत्सर्वद्रोणीसन्धिषु शास्त्रतः । स्तम्भप्रतिष्ठांकृत्वाथ तेषामुपर्यथाक्रमम् ॥
शोधिताभ्रकसामग्रीसहायेन दृढंयथा । कुर्यादावरणं शिल्पशास्त्रमार्गानुसारतः ॥२८७६॥



॥ शुद्धाम्बरात्तद्धि ॥

बोधानन्द वृत्तिः—

विमानरचनां शुद्धव्योमेनैव प्रकल्पयेत् । अन्यथानिष्फलं यातीत्युक्तंसूत्रेयथाविधि ॥
प्रसिद्धिद्योतनार्थायहिकारः परिकीर्तितः । तस्माद्यानोम्बरेणैव कर्तव्यमितिनिर्णितम् ॥

॥ अभ्रकलक्षणमुक्तं धातुसर्वस्वे ॥

चत्वार्यभ्रकजातिस्स्याद् ब्रह्मक्षत्रादिभेदतः । श्वेताभ्रकोब्रह्मजातिः क्षत्रियोरक्तवर्णकः ॥
पीताभ्रकोवैश्यजातिः कृष्णश्शूद्राभ्रकोभवेत् । ब्रह्माभ्रकप्रभेदास्तुभवेत् षोडशधाक्रमात् ॥
रक्ताभ्रको द्वादशप्रभेदेनसुविराजितः । वैश्यजातिस्सप्तधास्याच्छूद्रःपञ्चदशक्रमात् ॥२८८१॥
आहत्यपञ्चाशद्भेदान्शून्यस्याहुर्मनीषिणः ॥

॥ उक्तंहि शौनकीये ॥

अथाम्बरस्वरूपं व्याख्यास्यामोस्य चत्वारो वर्णा ब्रह्मक्षत्रियवैश्यशूद्रभेदात् । तेषां प्रभेदाः पञ्चाशत् तत्र ब्रह्मजातिष्षोडश क्षत्रियजातिर्द्वादश वैश्यजातिस्सप्त शूद्रजातिः पञ्चदशाहत्य षञ्चाशत् तेषां नामान्यनुक्रमिष्यामः । ब्रह्माम्बरस्य रव्यम्बरभ्राजकरोचिष्मकपुण्डरीकविरञ्चिकवज्रगर्भकोशाम्बरसौवर्चलसोमकामृतनेत्रशैल्यमुखकुरन्दरुद्रास्यपञ्चोदर-रुक्मगर्भाश्चेति षोडश नामानि भवन्ति । अथ शुण्डीरकशाम्बररेखास्यौदुम्बरभद्रक-पञ्चास्यांशुमुखरक्तनेत्रमणिगर्भकरोहिणकसोमांशककौर्मिकश्चेति द्वादश रक्ताभ्रकनामानि भवन्ति । वैश्याभ्रकस्य कृष्णमुखश्यामरेखगरलकोशपञ्चधाराम्बरीषकमणिगर्भक्रौञ्चास्य इति सप्त नामधेयानि भवन्तीति । अथ शूद्रस्य गोमुखकन्दुरकशौण्डिकमुग्धास्यविषगर्भमण्डूक-तैलगर्भरेखास्यपार्त्रणिकराकांशुकप्राणदद्रौणिकरक्तबन्धकरसग्राहकव्रणहारिकश्चेति पञ्चदश-नामधेयानि भवन्तीति ॥

पुण्डरीकोरोहणिकः पञ्चधारश्चद्रौणिकः । चातुर्वर्ण्यक्रमात्तेषु व्योमयानक्रियार्हकाः ॥
चत्वार्येतेविशेषेण यानसामग्र्यकर्मणि । शास्त्रज्ञैः बहुधाप्रोक्तास्सम्यक्श्रेष्ठतमाइति ॥२८८५॥
तस्मात्सर्वप्रयत्नेन यानमेतैःप्रकल्पयेत् । पूर्वोक्ताभ्रकमादाय यानसामग्र्यकर्मणि ॥
आदौसंशोधयेत् सप्तदिनंशास्त्रविधानतः ।

॥ शोधनाक्रममुक्तं संस्काररत्नाकरे ॥

स्कन्धारको शारणिकश्च पिञ्जुली वराटिका टङ्कणकाकजङ्घिका ।
शैवालिनी रौद्रिकक्षार सारदौवारिकोशम्बररञ्जकं च ॥
एतान् समाहृत्य पृथक्पृथक् क्रमात् सम्पूरयेद्द्रावणयन्त्रकास्ये ॥
पृथक्पृथग्द्रावकमाहरेच्छनैः पश्चाद्घटेकाचमये प्रपूरयेत् ॥ इत्यादि ॥
एतेष्वेकैकजातीयद्रावकेण यथाविधि । अम्बरंशोधयेत्तस्मात्तद्विधिः परिचक्षते ॥२८९०॥
चूर्णयित्वाऽभ्रकंसम्यक् स्कन्धारद्रावकेन्यसेत् । पाचनायन्त्रकोशेथपूरयेत तद्रसंपुनः ॥
त्रिदिनंपाचयेदग्नौ विद्युतात्रिदिनंपचेत् । समाहृत्याथविधिवत् कांस्यपात्रेपुनर्न्यसेत् ॥
तस्मिन्शारणिकद्रावं सम्मेल्याथदिनत्रयम् । आतपेविन्यसेत्पश्चात् पिञ्जुलीद्रावकंतथा ॥
सम्पूर्यभूपुटेपञ्चदिनानि स्थापयेत्ततः । समुद्धृत्यपुनःकांस्यपात्रे संस्थाप्यशास्त्रतः ॥
वराटिकाद्रावकंच पूरयित्वायथाविधि । पाचयेद्भूधरेयन्त्रे दिनमेकमतःपरम् ॥२८९५॥
समुद्धृत्यपुनःकांस्यपात्रे निक्षिप्यसर्षपैः । सम्मेल्यटङ्कणद्रावकं तस्मिन्सम्प्रपूरयेत् ॥
पश्चादर्जुनवृक्षस्यकाष्ठात् सन्दाह्ययत्नतः । खादिराङ्गारमध्येस्थापयेत्त्रिदिनंततः ॥
पूर्ववत्पुनरादाय कांस्यपात्रमतःपरम् । सम्पूरयेद्द्रावकाकजङ्घिकायाः प्रमाणतः ॥
चतुर्दश्यांतथापौर्णमास्यां चैत्रयथाक्रमम् । राकामध्येन्यसेद्रात्रिद्वयं पश्चात्समाहरेत् ॥
पुनस्तत्पात्रमानीय संग्राह्याभ्रकमुत्तमम् । सम्यक्संक्षालयेदुष्णवारिणा तदनन्तरम् ॥
कांस्यपात्रेपुनःक्षिप्त्वानीवारं मेलयेत्क्रमात् । पश्चाच्छैवालिनीद्रावकं तस्मिन्पूरयेत्ततः ॥
संन्यसेन्मृत्स्निकामध्ये दिनषट्कमतःपरम् । संगृह्यपूर्ववत्सम्यक्प्रक्षाल्य तदनन्तरम् ॥
कांस्यपात्रेविनिक्षिप्य रौद्रिकद्रावकंक्रमात् । सम्पूर्यविधिवत्कुण्डे शुष्कगोमयपिण्डकैः ॥
पुटंद्द्याद्विनस्तोनां चतुष्षष्टिप्रमाणतः । ततोभ्रकंसमाहृत्य तिलतैलेविनिक्षिपेत् ॥
न्यसेत्सार्धदिनंतस्मिन् पश्चात्संगृह्यचातपे । उदयास्तपर्यन्तं सन्ताप्याथयथाविधि ॥२९०५॥
प्रक्षाल्यकांस्यपात्रेथ प्रक्षिपेच्छुद्धमभ्रकम् । क्षारसारद्रावकंच धत्तूरीबीजमिश्रितम् ॥
सम्पूर्यकुण्डलीयत्रराशिमध्ये यथाविधि । विनिक्षिप्यपचेत्पश्चात् पुनस्संगृह्यशास्त्रतः ॥
पूर्वपात्रेविनिक्षिप्य न्यसेद्दौवारिकद्रवम् । तुषाराङ्गारतस्सम्यक्पाचयित्वा दिनंततः ॥
तदभ्रकंसमाहृत्यकांस्यपात्रे निधायहि । सम्बरद्रावकंतस्मिन् सम्पूर्यत्रिदिनंततः ॥



(42)

चतुरेकांशकर्पूरमभ्रके सन्निवेशयेत् । पश्चान्मन्थानयंत्रस्य क्षिप्त्वाकोशमुखान्तरे ॥२९१०॥
मथनंकारयेदेकदिनं सम्यग्यथाविधि । तदभ्रकंसमाहृत्य पाचयित्वोष्णवारिणा ॥
सिंहास्यवज्रमूषायां पूरयित्वातथैवहि । विन्यसेद्रञ्जकद्रावं टङ्कणंत्रिपलंतथा ॥
पलत्रयंशिलाक्षारं पलमेकंतुसूरणम् । कंगोटकंपञ्चपलंवृषलं पलसप्तकम् ॥
कूर्मटङ्कणकंचाष्टपलं रौहिणकंदश । शम्बरंत्रिंशतिपलं मुचुकुन्दंपलत्रयम् ॥
एतान्संशोध्यविधिवत् तस्मिन्सम्पूर्यमानतः । कुण्डेसिंहमुखेस्थाप्य इङ्गालान्परिपूर्यच ॥
पञ्चास्यकूर्मभस्त्रेण गालयेदतिवेगतः । यथाष्टशतकक्ष्योष्णवेगस्स्याद्गालनेतथा ॥२९१६॥
सम्यक्सङ्गाल्यविधिवद्यन्त्रास्ये तद्रसंन्यसेत् । एवंकृतेत्यन्तशुद्धं वैदूर्यसमवर्चसम् ॥
अत्यंतलघुअच्छेद्यमदाह्यं नाशवर्जितम् । भवेच्छुद्धाभ्रकंतेनविमानं कारयेद्दृढम् ॥ इत्यादि ॥
एवमभ्रकसंशुद्धिक्रममुक्त्वा यथाविधि । इदानींयानसामग्रयस्सङ्ग्रहेणप्रचक्षते ॥
वितस्तिद्वयगात्रांश्च वितस्तित्रयमुन्नतान् । नानाचित्रसमायुक्तान् नानावर्णैर्विराजितान् ॥
दृढानशीतिसंख्याकान् स्तम्भानादौप्रकल्पयेत् । एकैकस्तम्भमादाय पूर्वोक्तद्रोणिसंधिषु ॥
सर्वत्रस्थापयेत्पश्चात् कीलकैस्सुदृढंयथा । द्रोणीप्रमाणमौन्नत्यान्वितस्तिदशविस्तृतान् ॥
पट्टिकान्कल्पयित्वाथ स्तंभानामुपरिक्रमात् । समाच्छाद्याथ सर्वत्रावृत्तशंकुभिरेवहि ॥
बध्नीयात्सुदृढं सम्यग्द्विमुखीकीलकैस्तथा । बध्नीयात्तदावरणपट्टिकांश्च यथाविधि ॥
यंत्रप्रवेशनार्थं सामग्रीसंस्थापनायच । यथासङ्कल्पितं कर्त्रातथैवविधिवत्क्रमात् ॥२९२५॥
कुर्याच्चित्रविचित्राणि गृहाण्यस्मिन्दृढानिहि । यथाऽदृश्यंपरेषांस्यात् तथावरणकीलकैः ॥
कवाटान्स्थापयेत् तद्वद्वातायनमुखानपि । सर्वत्रगृहमध्येष्टदिक्षु शास्त्रानुसारतः ॥
कीलसञ्चालनेनाशु गृहसंभ्रमणंयथा । भवेत्तथावृत्तचक्रकीलकान् स्थापयेत्क्रमात् ॥
प्रसारणतिरोधानंचक्राणां प्रभवेद्यथा । तथाकीलकसंधानं कृत्वापश्चाद्यथाक्रमम् ॥
चक्राणिस्थापयेद्द्रोणीद्वयमध्यस्थसंधिषु । संपूरणाकर्षणार्थं तथासञ्चोदनायहि ॥२९३०॥
वाताकर्षणनालानि सचक्राणितथैवहि । भस्त्रिकामुखयुक्तानि विस्तृतास्यान्यथाक्रमम् ॥
विंशद्विहाय संधिद्वयकेन्द्राण्यथाविधि । संस्थापयेत ततस्तन्मुखपुरोभागतोमृदु ॥
पुरोवाताघातचक्राण्यपि सर्वत्रकीलकैः । अधःप्रसारणेवायुं तद्वदूर्ध्वप्रचोदने ॥
द्विमुखीनालचक्राणि यानावृत्तप्रदेशके । त्रिंशद्वितस्त्यंतरायं कृत्वाशास्त्रप्रमाणतः ॥

सर्वत्रस्थापयेत्पश्चाद्यानाधोभागदेशके । वेणीतंत्रीसमायुक्तानयःपिण्डान् यथाक्रमम् ॥
विमानाकाशगमनकाले संयोजितुंक्रमात् । अष्टदिक्षुतथामध्येकीलकान् नवकल्पयेत् ॥
वितस्तिसप्तकौन्नत्यं प्रथमावरणंदृढम् । कल्पयित्वाथविधिवद्यावदावरणंभवेत् ॥
तावत्सर्वत्रसुदृढान् नलिकाकीलकान्वरान् । ग्रहणार्थं मध्ययानपीटस्यसुदृढंतथा ॥
कृत्वावितस्तिदशकांतरं सर्वत्रशास्त्रतः । विंशद्वितस्त्यंतरायामं मध्यदेशेतथैवहि ॥
स्थापयेत्सुदृढं पश्चात्कीलकानांमुखांतरे । सचक्रतंत्रीर्विधिवद्योजयेत्सुदृढंयथा ॥२९४०॥
प्रतिकीलमुखेतन्त्रयां चञ्चूपुटद्वयंयथा । न्यग्भावेनोर्ध्वमुखतःविस्तृतं स्याद्यथातथा ॥
सम्मेलीकरणं पूर्वापरभागद्वयोःक्रमात् । यथाभवेत्तथा तंत्रीकीलकान्परिकल्पयेत् ॥
न्यग्गुलीकरणंचैव तद्वद्विकसनंयथा । छत्रीवत्प्रभवेच्चक्रकीलकान् कल्पयेत्तथा ॥
न्यग्गुलीकरणे तेषामुपरिष्टात्समन्ततः । प्रभवेत्पटावरणं यथाचोर्ध्वमुखांतरात् ।
तथापटंचोर्ध्वमुखे योजयेत्कीलकैस्सह । तिरोधानंपटस्याथ यथास्याद्गृहविस्तृते ॥२९४५॥
प्रथमावरणमेवं कृत्वापश्चाद्यथाविधि । द्वितीयावरणंकुर्यात् त्रिणेत्रेणमनोहरम् ॥

## ॥ तदुपरि चान्यत् ॥

बोधानन्द वृत्तिः—

प्रथमावरणस्यैवमुक्त्वाथ रचनाविधिम् । द्वितीयावणरचनाविधिरस्मिन् प्रकीर्त्यते ॥
प्रथमावरणस्योपर्यथाशास्त्रं यथाक्रमम् । अन्यदावरणंकुर्यादिति सूत्रविनिर्णयः ॥
प्रथमावरणात् किञ्चिद्ह्रस्वमावरणंयथा । तथाद्वितीयावरणं कर्तव्यमितिवर्णितम् ॥
वितस्तिशतकायामं यदिस्यात्प्रथमाङ्गणम् । वितस्त्यशीत्यायामं स्याद्द्वितीयावरणंतथा ॥
वितस्त्यशीत्यायामंच वितस्तित्रयगात्रकम् । द्वितीयावरणपंठं त्रिणेत्रेणैवकल्पयेत् ॥२९५१॥
पीठस्याधःप्रदेशेथ प्रथमावरणोपरि । संयोजनार्थंविधिवत्कीलकानिदृढंयथा ॥
प्रथमावरणेयावत्संख्यास्यात्तावदेवहि । संधारयेद्यथाकामं सर्वत्राधोमुखान्यथ ॥
कीलकद्वयसंयोजनार्थं शास्त्रानुसारतः । कीलीग्रहणयोग्यानि हस्तचक्राण्यपिक्रमात् ॥
कीलपंक्त्यनुसारेणोभयत्र यथाक्रमम् । कीलकानिस्थापयित्वा तेषामन्तरतस्ततः ॥२९५५॥
सचक्रनालान्सर्वत्रसतंत्रीन् योजयेद्दृढम् । विद्युत्स्थानमुखात्तेषु विद्युत्संयोजनंयथा ॥



भवेत्तथाबृहच्चक्रकीलकं सरलंदृढम् । विद्युत्पात्रमुखे सार्धवितस्त्यंतरतःक्रमात् ॥
स्थापयित्वातदारभ्य नालचक्रोपरिक्रमात् । सुसूक्ष्मांमृदुलांशुद्धां कनिष्ठाङ्गुलमानतः ॥
पट्टिकांयोजयेत्कीलकान्तं सम्यग्यथाविधि । पश्चात्कीलकपंक्तीनां मुखसंधिषुशास्त्रतः ॥
व्यत्यस्तहस्तवद्वेगादूर्ध्वमागत्यसर्वतः । पूर्वोत्तरावरणकीलकमाहृत्य पंक्तितः ॥२९६०॥
अन्योन्यंयोजयित्वाथ बध्नीयात्सुदृढंयथा । ततोर्ध्वमुखसर्पास्यकीलकानि पृथक्पृथक् ॥
संस्थापयेत् ततस्सर्वकीलकभ्रमणायहि । पूर्वोक्तविद्युत्पात्रस्य पुरोभागरथकीलकात् ॥
तदंतर्गतबृहच्चक्रभ्रमणं भवेद्यथा । तथाप्रसारयेद्विद्युच्छक्तिं तदुपरिक्रमात् ॥
शक्तिवेगानुसारेण तच्चक्रभ्रमणंभवेत् । एतच्चक्रस्यभ्रमणं दशवारंयथाभवेत् ॥
तत्पुरोभागस्थचक्रभ्रमणं वेगतोभवेत् । तेननालस्थचक्राणि सर्वाण्यपियथाक्रमम् ॥२९६५॥
भ्रामयन्तितद्विवेगेन कीलपंक्तिमुखावधि । पश्चादूर्ध्वमुखतस्सर्पास्यकीलकमार्गतः ॥
तच्छक्तिंचोदयेद्वेगात्तेन कीलकान्तरात्स्वयम् । तत्कीलहस्तस्सर्वत्र अनुलोमविलोमतः ॥
ऊर्ध्वमागत्य वेगेनावरणद्वयकीलकान् । समाहृत्याथसम्मेल्य बध्नातिसुदृढंयथा ॥
पूर्वोत्तरावरणयोः सन्धिसम्मेलनंयथा । विद्युदाकर्षणेनाशु प्रभवेत्सर्वतःक्रमात् ॥
तथापञ्चास्यमायूरकीलकानि नियोजयेत् । संधिसम्मेलनंतेन प्रभवेन्नात्रसंशयः ॥२९७०॥
तत्पृथक्करणार्थायपुनः कालानुसारतः । सर्वत्रशक्त्यपकर्षणकीलानपिपूर्ववत् ॥
शक्तिप्रचोदनयन्त्रेष्वेव संस्थापयेत्क्रमात् ॥ श्री श्री श्री श्री श्री श्री श्रीः ॥

२९७२

इति श्रीमहर्षिभरद्वाजप्रणीत
"यंत्रसर्वस्वा"ख्य महद्ग्रंथान्तर्गत "वैमानिकप्रकरणे"
दिवंगत पंडितवरेण्य सुब्रायशास्त्रिभिः
दैवकृपयाउपलभ्य मातृकारूपेणयावत्संगृहीतं
तत् परिसमाप्तम् ॥

यदक्षरपदभ्रष्टं मात्राहीनंतुयद्भवेत् । तत्सर्वंक्षम्यतां देव नारायणनमोस्तुते ॥

॥ श्रीकृष्णार्पणमस्तु ॥















MAHARSHI BHARADWAAJA'S

# VYMAANIKA-SHAASTRA

OR

## SCIENCE OF AERONAUTICS



Part of his unknown work

"YANTRA SARVASVA"

or

"ALL ABOUT MACHINES"



as revealed to venerable

Pandit SUBBARAYA SASTRY

and recorded in hand-written

Sanskrit Manuscript Form

translated into English by

G. R. JOSYER, M.A., Hons., F.R.E.S., M.R.S.L.

Founder Director,

INTERNATIONAL ACADEMY OF SANSKRIT RESEARCH.

Printed at the

CORONATION PRESS, MYSORE 4, INDIA.